

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ २२ ॥

श्रीमद्राघवाचार्यविरचिता

# वैकुण्ठविजय चम्पूः

संपादकः

डॉ० का० ई० गोविन्दन्



Rashtriya Sanskrit Sansthan
*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*
**New Delhi**



**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**



*General Editor*
**Dr. G. C. Tripathi**



No. 22

# VAIKUṆṬHAVIJAYA-CAMPŪ

*of*

Rāghavācarya

*Edited by*

Dr. K. E. Govindan




ALLAHABAD
1987

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )
नवदेहली

—o—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

डॉ० गयाचरण त्रिपाठी

—o—

द्वाविंशंप्रसूनम्

# वैकुण्ठविजयचम्पूः

राघवाचार्य विरचितः

—o—

संपादकः

डॉ० के० ई० गोविन्दन्

—o—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः–२
१९८७

राघवाचार्यविरचिता

# वैकुण्ठविजयचम्पूः

सम्पादकः

डॉ० के० ई० गोविन्दन्




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयाग-२

१९८७

## FOREWORD

We are extremely happy in placing in the hands of the lovers of Sanskrit poetry a unique *Campū* from the pen of the poet Rāghavācāryā who flourished in the last quarter of the 18th and the first quarter of the 19th century. Rāghavācārya was a follower of Viśiṣṭādvaita. He hailed from Gangādharapur near Kumbhakoṇam and after renouncing the world and adopting the Saṃnyāsa, lived in the Ahobila monastry (in Karnatak) as the Abbot of this Maṭha under the name Vīrarāghavavedāntayatīndra. He seems to have been born around 1770 A. C. and died in the year 1831 after composing not less than 25 works mostly dedicated to religious and philosophical subjects connected with the Vedānta of Rāmānuja, but some also to *Vyākaraṇa* and *Nyāya* etc. He has also composed a number of *Stotras* in the praise of Vaiṣṇava deities which abound in high literary merit. Two of his works viz. *Kāverīsaṅgamavaibhavam* and *Vaikuṇṭhavijayacampū* are, however, purely literary works though, of course, they exhibit the same kind of religious fervour and staunch devotion to Viṣṇu as his *stotras* do.

The prime purpose of *Vaikuṇṭhavijayacampū* is to glorify the Vaiṣṇavite Kṣetras and holy places mainly of the South with which he was not only thoroughly acquainted and to which he was deeply attached, but also of North which play an important role in Viṣṇuism and which he must have visited as a pilgrim. There is hardly any doubt as to the fact that he in composing this work drew inspiration mainly from the *Viśvaguṇādarśacampū* of Venkaṭādhvari who had flourished about a hundred years before him. However, in all fairness it must be said that the scope of the *Viśvaguṇādarśacampū* is much wider than the Campū of Rāghvācārya and that Veṅkaṭādhvari is perhaps more imaginative a poet. The Editor of this work in his introduction has ably pointed towards the borrowings of

Rāgnava from Veṅkṭādhvari (Pp 8-15) as well as from others, especially from Vadāntadeśika (Pp 16-21).

The critical edition of this work has been prepared on the basis of two manuscripts deposited in the Govt. Oriental Manuscripts Library, Madras as well as a printed edition which appeared long ago (around 1900 A. C.) in Grantha characters from Kumbhakonam. Our thanks are due to the GOML, Madras for kindly making the two manuscripts available to us.

No one else in our Institute could have been more suisable a person to undertake the editing of this work then Dr. K. E. Covindan who is a staunch Srīvaiṣṇvva himself and who has deep personal knowledge of all the places and locales mentioned and described in this work since he hails from a place very near to the original home of the author. He has also visited the monastry in which our poet lived in the last part of his life as its head and collected information about his family, religious training and date etc. He has also put in personal efforts to procure the manuscripts from Madras while he was there on a visit to his family. He has carried out the task of editing in an excellent manner and has appended a valuable introduction in chaste Sanskrit to this work which contains almost everything which is known about the author. I extent him any sincere thanks and congratulate him upon this erudite production.

I hope that this critical edition of the *Vaikuṇṭhavijayacampū* available for the first time in the Devanāgarī script shall be helpful in bringing back this literary work in the mainstream of Sanskrit learning and research.

**G. N. Jha Kendriya**
**Sanskrit Vidyapeetha**
*Allahabad*
**26th January, 1987**

**G. C. Tripathi**
*Principal*

श्री :

# वैकुण्ठविजयचम्पूग्रन्थस्य विषयानुक्रमणिका

पृष्ठाङ्काः

श्रीः

# भूमिका

जयन्ति जगतां पत्युः जगद्रक्षणदीक्षिताः ।
मूर्ता इव दयापूरा अस्मदाचार्यपङ्क्तयः ।।

अयि भोः अनेकसत्काव्यनाटकालङ्कारशास्त्रपारावारपारीणाः सहृदया विज्ञा विदाङ्कुर्वन्तु तत्रभवन्तः गीर्वाणभारतीपारावारतितीर्षूणां सरससत्काव्यपरिशीलन-तरणिसमारोहणं विना उपायान्तरं तावत् नाकर्ण्यते, न वा संदृश्यते। तदर्थमेव च कविकुलगुरुश्रीकालिदासमाघभारविबाणभट्टादिभिः कविमण्डलपुण्डरीकैः रघुवंश-शिशु-पालवध-किरातार्जुनीय-कादम्बर्यादीनि मङ्क्षु रसिकजनमनोविनोदजनकानि संस्कृत-भाषाव्युत्पित्सुजनानां झटिति संयत्तया तद्व्युत्पत्तिसंपादकानि च गद्यपद्यप्रचुराणि काव्यानि विरचितानि जाग्रत्येव। एतादृशसत्काव्यस्यैव लक्षणादिपरिज्ञानार्थं तदवान्त-रव्यङ्ग्य-ध्वनि-रस-दोष-गुण-शब्दालङ्कार-अर्थालङ्कारादिप्रतिपादनाय च तत्रभवद्भिः मम्मटाचार्यादिभिः काव्यप्रकाशादयो लक्षणग्रन्थाः व्यरच्यन्त । तत्र च 'तददोषौ शब्दार्थौ सगुणौ अनलङ्कृती पुनः क्वापि' इत्यादि काव्यलक्षणं चाभिहितम्। पण्डित-राजजगन्नाथप्रभृतयः 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्याद्येव लक्षणम् अभ्यधुः। कथमप्यस्तु; किं तूभयत्र आस्वाद्यव्यञ्जकत्वरूपलक्षणस्य विद्यमानत्वात् सहृदयहृदयाह्लादजनकं काव्यमिति सामान्यतः सङ्क्षिप्तलक्षणं भवितुमर्हति। तच्च केवलं पद्यरूपं, गद्यरूपं, गद्यपद्यमिश्रं वाऽस्तु, सर्वमपि तत् पूर्वोक्तलक्षणकुक्षिनिक्षिप्त-मेव भवति।

अपि च तत्काव्यं दृश्य-श्रव्यभेदेन द्विधा भिन्नम्। यत्केवलं वाचनश्रवणसम-कालमेव रसिकजनहृदये आह्लादजननपूर्वं चमत्कारं जनयति तच्छ्रव्यम्। यच्च धीरवीरपुरुषचरितप्रचुरं विशेषतः प्रत्यक्षतया अभिनीय प्रदर्शितं सत् रसविञ्चित्त-

मानन्दयति तद्दृश्यम् । अत एव तन्नाटकमित्यभिधीयते । पूर्वोक्तं च श्रव्यं केवलं काव्यशब्देनैव व्यपदिश्यते । एतस्मिन्नपि चम्पूशब्दाभिधेयः एकः प्रकारो वर्तते । तस्य लक्षणं च तज्ज्ञैः—

**'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते'**

इति ग्रथितमिति सुविदितमेव समेषाम् । एतादृशलक्षणसम्पन्नैवेयं वैकुण्ठविजयचम्पूः प्रथते यत्सम्बन्धेन किंचिद्वक्तुकामा वयमिति ।

**प्रबन्द्धृ-काल-देशादिनिर्णयाः**

प्रकृतप्रबन्द्धृणां राघवाचार्याणां जन्मादिविषये यत्प्रमाणं प्राप्तं श्रीअहोबिलमठीयगुरुपरम्पराग्रन्थतः, वैकुण्ठविजयचम्पूग्रन्थादिमभागाच्च तदत्र प्रस्तूयते ।

इमे च राघवाचार्याः दक्षिणदेशे तमिलनाडुराजधान्यन्तर्गते चोलमण्डलान्तर्भूते कुम्भघोणनगरपार्श्वे विराजमाने कावेरीतटवर्तिनि[1]गङ्गाधरपुरमिति विख्याते ग्रामे विद्वज्जनोपशोभिते, श्रोत्रियकुले श्रीवत्सगोत्रे च लब्धजन्मानः [2]न्याय-अलङ्कार-व्याकरण-वेदान्तादिविविधविद्याविद्योतितान्तःकरणाः अपरवयसि स्वीकृततुरीयाश्रमाः भगवद्रामानुजाचार्यप्रवर्तितसत्सम्प्रदायनिर्वाहकाः अहोबिलक्षेत्रमध्यारूढे श्रीमल्लक्ष्मीनृसिंहस्वामिनि न्यस्तभराः तदाराधनानुष्ठानमेव परमप्रयोजनं मन्वानाः [3]श्रीमदहोबिलमठास्थानागतगुरुपङ्क्तिषु सप्तविंशतितमा गुरवश्च आसन् ।

---

१. गदितं गङ्गाधरपुरवास्तव्यैः वात्स्यराघवार्यैः ।
भावप्रकाशिकायां दोषदुर्बलमपि व्युदस्यामः ॥
(ब्र० श० वि० पृ० १)

२. तर्कालङ्कारभूतः फणिफणितमहाभाष्यपारीणबुद्धिः
तन्त्रे चापि स्वतन्त्रः श्रुतिमकुटपरिश्रान्तकान्तान्तरङ्गः ।
काव्यालङ्कारवृत्तेष्वपि च परिचयाच्छिक्षितश्चार्थजाते
पौराणेऽप्येतिहासे भृशमिह विबुधैः ख्यायतेऽसौ कवीन्द्रः ॥
(वै० वि० च० श्लो० १८)

३. परमपावने श्रीमद्वैष्णवसत्संप्रदाये भगवद्रामानुजमुनिप्रवर्तिते दुःखपङ्कनिमग्नचेतनततिसमुद्धरणायानेके मठाः आचार्याश्चासन् । तत्रान्यतमेयं श्रीमदहोबिलमठसंस्था । इयं च संस्था कर्णाटकदेशान्तर्गतयदुगिरिवासिकेशवाचार्यपुत्रैः श्रीमद्भिः श्रीनिवासा-

इमे सर्वतन्त्रनिपुणस्य श्रीमन्नृसिंहाज्ञया प्राप्तसन्न्यासाश्रमस्य [1]श्रीनिवासाख्यस्याचार्यश्रेष्ठस्य प्रपौत्राः, सर्वतन्त्रेषु निस्सीमप्रतिभस्य निरर्गलमतेः नृहर्याज्ञयोपात्ततुरीयाश्रमस्य [2]वेङ्कटेशाभिधस्य पौत्राः, शमधनस्य त्र्यय्यन्तविद्यानिधेः नरकेसर्यादेशेन लब्धचतुर्थाश्रमस्य [3]श्रीनिवासाख्यस्य तनूजाश्चासन् ।

---

चार्यैः स्थापिता । इमे च कलौ ४४८० वर्षे सिद्धार्थिसंवत्सरे कन्यामासे शुक्लपञ्चम्यां गुरुवारोपेतज्येष्ठानक्षत्रे धनुर्लग्ने लब्धजन्मानः निजपितृसकाशात्प्राप्तसंस्काराः समधिगतनिगमाः 'घटिकाशतमम्माल्' इत्याख्यस्वामिसकाशात्सुशिक्षिताध्यात्मविद्याः अहोबिलस्थश्रीमन्नृसिंहादेशानुसारं तत्र गत्वा तदुपदिष्टप्रेपमन्त्राः कलौ ४५०० वर्षे बहुधान्यसंवत्सरे कन्यामासे सितपञ्चम्यां सूर्योदयकाले स्वीकृततुरीयाश्रमाः तत्प्रभृति 'श्रीशठकोपजीयर्' इत्यभिख्यया प्रख्याताः प्रतिनगरं प्रतिग्रामं गत्वा सदुपदेशेन चेतनानामपवर्गमार्गं बोधयन्तोऽवर्तन्त । अर्थात् इतः ५८७ संवत्सरात् प्राक् स्थापिते अस्मिन्नहोबिलमठे आदिवण्शठकोपस्वामिनः आरभ्य अद्ययावदविच्छिन्नरूपेण गुरुपरम्परा प्रचलति । अस्यां गुरुपरम्परायां इमे सप्तविंशतितमगुरुरूपेणासन् ।

१. यस्यासीत्प्रपितामहो बुधमणिः श्रीश्रीनिवासाख्यया
विख्यातो भुवि सर्वतन्त्रनिपुणः साहित्यपारीणधीः ।
वैराग्येण गरीयसा प्रमुदितः श्रीमन्नृसिंहाज्ञया
प्राप्तः संयमितां प्रकृष्टसुधियामध्यात्मविद्यागुरुः ॥

(वैं० वि० च० श्लोक : १३)

२. श्रीमान्यस्य पितामहः कविवरः श्रीवेङ्कटेशाभिधो
निस्सीमप्रतिभो निरर्गलमतिः सर्वेषु तन्त्रेष्वपि ।
भूत्वा योगिवरो नृहर्यनुमतेः प्राप्तोऽखिलाचार्यतां
विख्यातो नरसिंहमूर्तिरपरेत्याबालवृद्धं भुवि ॥

(वैं० वि० च० श्लोक : १४)

३. तातो यस्य बुधाग्रणीः कविवरः श्रीश्रीनिवासाह्वयो
नानातन्त्रपरिश्रमः शमधनस्त्र्यय्यन्तविद्यानिधिः ।
वैराग्यातिशयेन सर्वविरतः श्रीमन्नृसिंहाज्ञया
संप्राप्तो यतिराजतां स जगदाचार्यो गुणैरेधते ॥

(वैं० वि० च० श्लोक : १५)

यत्तु [१]श्रीकृष्णमाचार्यैः उक्तं राघवाचार्यः वेङ्कटेशाचार्यस्य प्रपौत्र इति तत् पूर्वोक्तग्रन्थकृदुक्त्यैव निरस्तम् ।

गङ्गाधरपुरवास्तव्यानां राघवाचार्याणामेतेषां विद्यागुरवः श्रीमदहोबिलमठास्थानगुरुपरम्परायां पञ्चविंशतितमा आचार्याः [२]श्रीनिवासयतीन्द्रमहादेशिकाः मोक्षोपाय [३]शरणागत्यनुष्ठानगुरवः उपर्युक्तमठास्थानगुरुपङ्क्तिषु षड्विंशतितमा आचार्याः [४]श्रीरङ्गनाथयतीन्द्रमहादेशिकाश्चासन्निति प्रकृतग्रन्थकर्त्रुक्त्या, प्रकृतग्रन्थकर्तृ [५]तनियन् श्लोकेन च व्यवस्थापितं भवति ।

राघवाचार्या इमे [६]वैशाखमासे श्रविष्ठानक्षत्रे लब्धजन्मान इति [७]श्रीसन्निधि-

---

१. History of Classical Sanskrit Literature—P. 4 5

२. श्रीमच्छ्रीनिवासयोगीश्वरगुरुकरुणालम्भितज्ञानभूमा ।
(वै० वि० च० श्लोक : १८)

३. मोक्षप्राप्तये भक्तियोगः शरणागतिः इति उपायद्वयमङ्गीकृतं भगवद्रामानुजमुनिमते । तत्र भक्तियोगः यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाध्याख्याष्टाङ्गयोगसहितः, तैलधारावदविच्छिन्नरूपः, आदेहपतनमनुष्ठीयमानः, अत्यन्तप्रयाससाध्यः । शरणागतिस्तु आनुकूल्यसंकल्प-प्रातिकूल्यवर्जन कार्पण्य-गोप्तृत्ववरण-महाविश्वासाख्याङ्गपञ्चकोपेता सकृदनुष्ठानयोग्या, सुलभसाध्या, सकलचेतनसाधारणी । इयं च शरणागतिः यस्य चेतनस्य कृते येनानुष्ठीयते सः तस्याचार्यो मोक्षमार्गप्रदातेति सिद्धान्तः ।

४. श्रीश्रीनिवासयतिशेखरलब्धबोधं
श्रीरङ्गनाथयतिधुर्यपदाब्जभृङ्गम् ।
श्रीवीरराघवमुनिश्रुतिमौलिसूरिं
श्रीनाथभक्तिभरिताशयमाश्रयामः ॥

५. तनियन् इत्यस्यायमर्थः—शरणागत्यनुष्ठानगुरुः अथ वा श्रीवैष्णवद्योतकतापादिपञ्चसंस्कारकर्ता यो भवति, तस्य श्लोकरूपेण प्रतिदिनं स्मरणम् इति । इयं च श्रीवैष्णवपरिभाषा ।

६. सन्निधिगुरुपरम्पराग्रन्थे पृष्ठम् ९६ ।

७ श्री अहोबिलमठास्थाने मूर्धाभिषिक्तानां आचार्याणां इतिवृत्तोपपादनपरः संस्कृतद्रविडभाषामयः श्रीशठकोपयतीन्द्रमहादेशिकैर्विरचितः तिरुवल्लिकेणि वाणीभूषणमुद्रणालये को–अनन्ताचार्यैः (1914 A. D.) मुद्रापितः ।

गुरुपरम्पराख्यग्रन्थादवगम्यते । किं तु कस्मिन् वत्सरे इति शङ्कायाम् उपर्युक्तग्रन्थ एव इमे [1]कलियुगवत्सरे ४९२९ (A. D. 1929) सर्वधारिवर्षे धनुर्मासे शुक्लपञ्चम्यां संन्यासाश्रमं स्वीकृत्य श्रीमदहोबिलमठास्थानमलमकार्षुरित्युक्तम् । संन्यासाश्रमस्वीकारः ब्रह्मचर्याश्रमगृहस्थाश्रमात्परमेव भवति । अनयोराश्रमयोः कृते यदि त्रिंशद्वत्सराणि इति स्वीक्रियते, तर्हि अष्टादशशतकस्यान्तिमभाग एतेषां जन्मकालो भवितुमर्हति ।

किं च विद्वत्सार्वभौमैः नावल्पाकाभिजनैः श्रीमदण्णयाचार्यैः इतः सपादशतसंवत्सारात्प्राक् लब्धजन्मभिः राघवाचार्यकृतस्य ब्रह्मशब्दवादार्थग्रन्थस्य खण्डनग्रन्थः [2]ब्रह्मशब्दार्थविचारः कृतः । अनेनापि राघवाचार्याणां पूर्ववर्तित्वं सिद्ध्यति ।

अपि चेमे संन्यासाश्रमस्वीकारात्परं वीरराघववेदान्तयतीन्द्रनाम्ना विख्याताः [3]कल्यब्दे ४९३२ (A. D. 1831) खरसंवत्सरे सिंहमासे शुक्लाष्टम्यां प्राकृतदेहं परित्यज्य श्रीवैकुण्ठं जग्मुरिति सन्निधिगुरुपरम्पराग्रन्थस्य [4]चरमश्लोकादवगम्यते ।

---

१. सन्निधिगुरुपरम्पराग्रन्थे पृष्ठम् ९६ ।

२. दिल्लीस्थराष्ट्रियसंस्कृतसंस्थानस्य संस्कृतविमर्शपत्रिकायाः (1982 A. D.) दशमखण्डस्य प्रथम—द्वितीयभागयोः मुद्रितः ।

३. सन्निधिगुरुपरम्पराग्रन्थे पृष्ठम् ९६ ।

४. अब्देऽस्मिन् खरनाम्नि वासरपतौ संप्राप्तसिंहे सिते
पक्षे सोमजवासरे वसुतिथौ ज्येष्ठर्क्षसंशोभिते ।
वेदान्तोत्तरवीरराघवयतिक्ष्मापालचूडामणिः
श्रीलक्ष्मीनरकेसरीन्द्रचरणद्वन्द्वं ययौ शाश्वतम् ॥
खरसिंहसिताष्टम्यां सौम्यज्येष्ठर्क्षसंयुजि ।
वीरराघववेदान्तयतीन्द्रोऽगात् परं पदम ॥

इति चरमश्लोकः । चरमश्लोको नाम — श्रीवैष्णवसंप्रदाये मृतस्य जनस्य कृते मृतदिनादारभ्य द्वादशाहं यावत् कर्मकाण्डोक्तप्रकारेण संस्कारादिकं विधाय, त्रयोदशदिवसे अमुकः, अस्मिन् वत्सरे, नक्षत्रे, पक्षे, अस्यां तिथौ च लीलाविभूतिं विधूय नित्यविभूतिं गत इति स्रग्धरावृत्तेऽथवा शार्दूलविक्रीडितछन्दसि श्लोकमेकं, अनुष्टुप्वृत्ते श्लोकमेकं च रचयित्वा तन्महिमवर्णनपूर्वकं तं कीर्तयन्ति इति ।

किं च एतेषां प्राकृतदेहपरित्यागः आन्ध्रप्रान्ते कृष्णानद्यास्तटे गद्वालाख्ये नगरे आसीत् । यतो हि तेषां [1]बृन्दावनमद्यापि तत्रैवास्ति ।

**कृत्यन्तराणि—**

श्रीमद्वात्स्यवराघवाचार्यैः विदितवेदितव्यैः न्यायवेदान्तव्याकरणधर्मशास्त्र-स्तोत्रकाव्यग्रन्थाः पञ्चविंशतिसंख्याकाः ग्रन्थाः कृताः । तेषां नामानि अत्र प्रस्तूयन्ते—

(१) महाभाष्यव्याख्या श्लोकमयी (२) वृत्तिसूत्रविचारः इति व्याकरणशास्त्रग्रन्थौ द्वौ ।

(३) चण्डमारुतव्याख्या (४) ब्रह्मशब्दवादार्थ इति विशिष्टाद्वैत-वेदान्त संबन्धिनौ द्वौ ग्रन्थौ ।

(५) विशेषवाद इति न्यायशास्त्रसंबन्धि-ग्रन्थः एकः

(६) तात्पर्यरत्नावली

(७) न्यासोल्लासः

(८) मूलमन्त्रजपनिर्णयः

(९) यतिविषये सुदर्शनहोमाभावनिर्णय

(१०) संक्रमणनिर्णयः इति चत्वारः संप्रदायग्रन्थाः

(११) जयन्तीनिर्णयः

(१२) श्रवणद्वादशीनिर्णयः

(१३) नदीरजोदोषनिर्णयः

(१४) स्त्रीसंस्कारक्रमविषयसव्याख्यान-श्लोकः

(१५) दशवारदीर्घगायत्रीजपनिर्णयश्लोकः इति षट्धर्मशास्त्रग्रन्थाः

(१६) कृपासागरस्तवः

(१७) क्षीरनदीस्तवः

(१८) नन्दादीपस्तवः

(१९) विहगेश्वरस्तवः

(२०) देवराजस्तवः

(२१) श्रीलक्ष्मीनृसिंहस्तवः

(२२) श्रीलक्ष्मीनृसिंहमङ्गलम्

(२३) श्रीनिवासयतीन्द्रमहादेशिकदशकम् इत्यष्टौ स्तोत्रग्रन्थाः

(२४) कावेरीसंगमवैभवम्

(२५) वैकुण्ठविजयचम्पूः इति द्वे काव्ये इति ।

---

१. श्रीवैष्णवसंन्यासिनां देहात्प्राणनिष्क्रमणात्परं अग्निसंस्कारं विना, भूमिं खानयित्वा तद्देहं तत्र निक्षिप्य तदुपरि मन्दिरवत् भवनमेकं निर्मान्ति । अस्यैव बृन्दावनमिति संज्ञा । केचित् तत्र तस्य प्रतिकृतिं प्रस्तरमयीं, लोहमयीं वा संस्थाप्य पूजयन्ति ।

उपर्युक्तेषु ग्रन्थेषु अद्य यावत् वैकुण्ठविजयचम्पूः, श्रीनिवासयतीन्द्रमहादेशिकमङ्गलम् इति द्वावेव ग्रन्थौ मुद्रितौ। अन्येषु केचन सन्ति अमुद्रिताः, केचन नाममात्रप्रसिद्धाः।

**प्रकृतप्रबन्धशैली—**

नाटकादिषु पात्रादिकं सृष्ट्वा तद्द्वारा सामाजिकानां चेतसि कंचन चमत्कारं समुत्पादयन्ति स्म केचन। तद्वत् चम्पूग्रन्थेष्वपि पात्रद्वयं सृष्ट्वा तद्द्वारा आनन्दमुत्पादयितुं प्रवृत्ताः केचन। तत्र विश्वगुणादर्शचम्पूप्रणेतारः सप्तदशशतकीयाः श्लेषयमकचक्रवर्तिनः वेङ्कटाध्वरिनामानः अग्रगण्याः। इमे [1]विश्वगुणादर्शचम्पूग्रन्थे कृशानुविश्वासुनामधेयौ गन्धर्वौ सृष्ट्वा तद्व्याजेन विश्वस्य गुणदोषौ न्यरूपयन्।

द्वितीयः बुक्कपट्टणवासिभिः श्रीशैलवंशावतंसैः शठमर्षणगोत्रजैः अण्णयार्यैः निर्मितः तत्त्वगुणादर्शचम्पूग्रन्थः। अस्यैव तत्त्वार्थदर्पण इत्यपि नामान्तरं श्रूयते। अत्र विजयजयाख्यौ शिवविष्णुभक्तौ सृष्ट्वा तद्द्वारा शैववैष्णवमतविशेषः निरूपितः। अस्य तत्त्वगुणादर्शचम्पूग्रन्थस्य मूलकर्तृभिरेव कृता एका [2]टीका अस्ति। सव्याख्येयं तत्त्वगुणादर्शचम्पू अद्य यावदप्रकाशिता अस्ति।

तृतीयेयं वैकुण्ठविजयचम्पूः द्वितीयेव विष्णुपारम्यप्रख्यापनपरा। विश्वगुणादर्शचम्पूवत् जयविजयाख्यजनौ सृष्ट्वा प्रथमं अकुण्ठमहिमानं वैकुण्ठनाथं स्तुत्वा तदवसरे नीलकण्ठवैकुण्ठयोर्मध्ये क उत्तम इति सुष्ठु उपवर्ण्य, ततः भूलोकवैकुण्ठं श्रीरङ्गनगरं, तत्रत्ययत्याचार्य-देवता-गरुड-कावेरीनद्यादिकं स्तुत्वा, पश्चात् महीशूरनगरयादवाद्रिक्षेत्रसह्याद्रीणां वर्णनं विधाय, अयोध्या-गङ्गानदी-काशी-द्वारकापुरीणां

---

१. विश्वगुणादर्शचम्पूः योगीत्युपाह्वबालकृष्णशास्त्रिकृतटीकया सह निर्णयसागरमुद्रणालयात् १९१५ क्रि० संवत्सरे प्रकाशिता।

२. D. No. 12295 Government Oriental Manuscript litrary, Madras, Descriptive Catalogue Vol. No. XXI P. 8223.

३. D. No. 12296. Government Oriental Manuscript library, Madras. Descriptive Catalogue Vol. No. XXI p. 8225.

माहात्म्यं च सरसचारुगद्यपद्येन संकीर्त्य ग्रन्थोऽयं समापितः। अत्राधिकाधिकं श्लेष-प्रास-यमकशब्दालङ्कारेष्वेव श्लोकाः ग्रथिताः सन्ति।

इमे प्रतिविषयं आदितः आन्तं वेङ्कटाध्वरिणम् अनुसरन्ति। तत्र कानिचन उदाहरणानि पाठकानां तोषायोपस्थापयामि।

वेङ्कटाध्वरिणा आदौ विश्वगुणादर्शचम्पूग्रन्थस्योपोद्घातप्रकरणे [1]जगद्दर्शने-च्छया कृशानुविश्वावसुनामकौ द्वौ गन्धर्वौ विमानमारुह्य गगने चचरतुः। [2]तयोर्मध्ये पूर्वः दोषैकदृक्, अपरस्तु गुणग्रहणकौतुकी इति द्वाभ्यां श्लोकाभ्यां प्रतिज्ञातम्। तथैव इमेऽपि राघवाचार्याः वैकुण्ठविजयचम्पूप्रबन्धस्यादौ [3]लोकसंचारकामौ विजयजय-समाख्यौ गुणदोषग्राहिणौ इति श्लोकेनैकेन प्रतिज्ञामकार्षुः।

सूर्यमण्डलान्तर्वर्तिनो नारायणस्याभिवादनावसरे कृशानुः [4]हृदये निष्ठन् अपथे एव जनान् प्रवर्त्य नरके पातयति तान्, अतो निर्घृणोऽयं नारायणः कथं स्तूयते इति

---

१. विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्।
कृशानुविश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार॥
(विश्व० श्लोक : ५)

२. कृशानुरकृशासूयः पुरोभागिपदं गतः।
विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी॥
(विश्व० श्लोक : ६)

३. विजयजयसमाख्यौ पूरुषौ हि त्रिलोकी-
चरितसमवगत्यै लोकसंचारकामौ।
गुणतदितरजालग्राहिणौ तत्र चाद्यः
स्वसुकृतपरिपाकात् श्रीशभक्तो बभूव॥
(वै० वि० च० श्लो० २५)

४. स्वानुज्ञामनवाप्य दर्पभरितः स्वाज्ञां विलङ्घेत यः
तस्यैवेह तनोति लौकिकनृपश्चण्डोऽपि दण्डं रुषा।
अन्तर्याम्यपथे प्रवर्त्य भविनो हन्त स्वयं नारके
यस्तान्पातयति क्रुधा स तु किं नारायणो निर्घृणः॥

विनिन्दति । [1]पाषाणतरुपशवादिदेहानां मध्ये मनुष्यदेहं स्वर्गापवर्गास्पदं दत्तवति श्रियः-पत्यौ नास्ति उपकारबुद्धिः । किन्तु स्वकर्मानुसारं दुःखे जातुचिदागते तस्मिन् नैर्घृण्य-मारोप्यते हन्त इति उद्धरति विश्वासुः । तथैव इमेऽपि वैकुण्ठनाथस्यापादचूडाभि-वन्दनावसरे [2]ज्ञानस्वरूपे जीवे स्त्रीपुंसभेदं समुत्पाद्य सर्वानपि चेतनवर्गान् भ्रामयति इति जयद्वारा दूषयित्वा, विजयद्वारा [3]सकलोत्पत्तिस्थितिनाशहेतुं योगिहृदयमध्य-मध्यमासीनं संसारविनाशकं को नाम निन्द्यात् भुवि इति भगवन्तं भूषयन्ति ।

भूलोकवैकुण्ठमिति प्रख्यातस्य श्रीरङ्गनगरस्य प्रशंसाप्रसङ्गे [4]हरिणनयनस्त्री-जनशृङ्गारक्रीडायोग्यनारङ्गवृक्षपरिपूर्णगृहारामोपशोभिता संपूर्णनयशास्त्रनिपुण - विद्वज्जनपरिसेव्यमानेयं श्रीरङ्गनगरी इति वेङ्कटाध्वरिणा अभिहितम् । इमे तु

---

१. जीवानां दृषदादिमत्त्वमयतां स्वर्गापवर्गास्पदं
देहं दत्तवति श्रियः प्रियतमे नैवोपकारस्मृतिः ।
दुःखे जातुचिदागते स्वकलितादुदुष्कर्मणः पश्चिमा—
न्नाथे हन्त निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते ॥

(विश्व० श्लो० १६, २२)

२. ज्ञानैकाकाररूपे स्थितवति विमले जीववर्गे निसर्गे
सृष्ट्वा स्त्रीपुंसभेदं भ्रमपरिजनकं मायया मेधयाऽसौ ।
ब्रह्मादीनप्यथर्षीन् भृशमिह विषये हन्त बंभ्रम्यमाणान्
कृत्वा दत्वाऽहमादिभ्रममपि मुदितस्तेभ्य आस्ते मुरारिः ॥

३. जायन्ते सकलाः प्रजाः खलु यतो जीवन्ति येन त्विमाः
तिष्ठन्ति ध्रुवमङ्ग यत्र य इमाः प्राणप्रयाणागमे ।
चित्ते यं विनिवेशयन्ति मुनयः संसारनिर्धूतये
यत्नेन क्षणमादरेण तमिमं को नाम निन्द्यात् भुवि ॥

(वैं० वि० च० श्लो० ३६, ४२)

४. सारङ्गडिम्भनयनानवकेलियोग्य-
नारङ्गमुख्यतरुपुष्कलनिष्कुटेयम् ।
श्रीरङ्गदिव्यनगरी प्रथते नयाब्धि-
पारंगतैर्बुधजनैः परिसेव्यमाना ॥

(विश्व० श्लो० ३९६)

तथैव ईषत्परिवर्त्य[1] अशेषश्रुतिततिनटीगीतचरिता मुनिश्रेष्ठैः सेव्या, गोपुरोपशोभिता रङ्गनगरी विलसति इत्यवर्णयन् ।

एवं श्रीवैष्णवयत्याचार्यश्रेष्ठानां वर्णनाप्रसङ्गे [2]निखिलमपि जनं संपीड्य तेषां धनादिकं चोरयित्वा वनगिर्यादिषु वसतां जनानां तापादिसंस्कारं मन्त्रोपदेशं च कृत्वा तद्दत्तवित्तैर्दधति तनुमिम इति कृशानुद्वारा दूषयित्वा विश्वावसुद्वारा[3] सपापजनतापवित्रीकरणता महात्मनामेतेषां यदि दोषाय भवेत् तर्हि दुष्टानपि जनान् पावयतो गाङ्गपूरस्याप्ययं दोषस्तुल्य इत्याभूषयन्ति ।

वैकुण्ठविजयचम्पूकारोऽपि [4]नावा जलमध्यस्थदेशं गत्वा तत्रत्यशूद्रादीन् तापदिभिः संस्कार्य तद्दत्तवित्तैः यतिपतीनां दत्त्वा दृप्ताः सन्ति इति जयमुखेन विनिन्द्य, विजयमुखेन [5]भगवत्कैङ्कर्यरता इमे आचार्याः भगवत्सेवार्थं समुपागतान् क्षितिपतीन्

---

१. स्फुटीभूताशेषश्रुतिततिनटीगीतचरिता
 जटीन्द्राद्यैः सेव्या स्तुतिकृतिपटीयोभिरनिशम् ।
जरीजृम्भत्संपच्छ्रुतिसुखकरी गोपुरदरी
 नरीनृत्यद्भूषा विलसदमरी रङ्गनगरी ।।
(वै० वि० च० श्लो० ९९)

२. हृत्वा मार्गे द्विजादीनखिलमपि धनं हन्त हृत्वाऽतिदृप्ता
 दुर्वृत्तास्तस्करा ये वनगिरिनिलया ये च नीचा इहान्ये ।
कृत्वा चक्राङ्कमेषां झटिति विदधतः किं च मन्त्रोपदेशं
 तद्दत्तैरेव वित्तैर्दधति तनुममी वंशपारंपरीभिः ।।

३. तापादिभिः सपापां जनतां पुनतां महात्मनामेषाम् ।
दोषश्चेदेष समो दुष्टान् पुनतोऽपि गाङ्गपूरस्य ।।
(विश्व० श्लो० २४६, २५७)

४. गत्वा नावा सुदूरं जलनिधिजठरे संस्थितं देशजातं
 कृत्वा तत्रत्यशूद्रक्षितिपतिविततेरङ्कनं तत्प्रदत्तम् ।
लब्ध्वा द्रव्यं किलैते स्वयमथ यमिनां प्रागिहोदाहृतानां
 दत्वा भिक्षां सुदृप्ता बत हतकलिसाम्राज्यमुज्जृम्भयन्ति ।।

५. नित्यं श्रीरमणालये स्थितिजुषः कैङ्कर्यबद्धादराः
 कैङ्कर्याचरणश्रमेण जनितस्वेदाम्बुमुक्ताफलाः ।

स्तुत्वा वित्तं लब्ध्वा, भगवन्मन्दिरनिर्माणकार्ये एव तद्वित्तमुपयुञ्जत इति प्रशंसति ।

'देशभाषामयं काव्यं श्रोतव्यं जातु न द्विजैः' इति स्मृतिवचनेन निषिद्धायां [1]द्रविडगीतायामेतेषामासक्तिः, न च निगमनिचय इति दूषयित्वा उपर्युक्तस्मृतिवचनं म्लेच्छदेशभाषाविषयकं, न तु शिष्टजनपरिगृहीतद्रविडभाषाविषयकमिति [2]द्रविड-भाषायाः कर्ता सकलमुनिजनवन्द्यः अगस्त्यः, शमधनाः शठकोपप्रभृतयः आचार्याः तद्भाषाप्रबन्धारः, अत एव न तेषासामासक्तिर्दोषावहेति च समर्थयति वेङ्कटाध्वरि-महाभागः ।

प्रकृतग्रन्थकारोपि तथैव [3]द्रमिडभणितौ विश्वासः एतेषां, न वेदसमूहे इत्युक्त्वा दोषं [4]तमुद्धरति ।

---

सेवायै समुपागतान् क्षितिपतींस्तुत्वा गृहीत्वा धनं
प्राकारादिकमारचय्य भगवत्प्रीत्यैव तत्कुर्वते ॥
(वें० वि० च० श्लो० ११२, १२६)

१. नैषां न्याय्य इह द्विजान्वयजुषां भाषाप्रबन्धे श्रमो
वेदे विश्वपुमर्थसाधनविधौ बद्धादरे जाग्रति ।

२. स यासां कर्ता चुलकितसमुद्रो मुनिवरः
प्रबन्धारः प्रौढाः शठमथनमुख्याः शमधनाः ।
प्रवक्तारः शुद्धाः प्रथितयशसः पूर्वगुरवो
गिरांपारे तासां जयति गरिमा द्राविडगिराम् ॥
(विश्व० श्लो० २३०, २४५)

३. न विश्वासस्तेषां श्रुतिविहितसन्ध्यादिकलने
न वा स्वासक्तिः सा निगममकुटीनामधिगमे ।
समाश्वासः किं तु द्रमिडभणितौ नूतनकृतौ
स विश्वासाधीशो कथमवति दृप्तान् भृशममून् ॥

४. प्रोक्ता द्रामिडसंहिता भगवता पीताखिलाम्भोधिना
स्फीतात्मानुभवेन नैजतपसा धूतांहसा रंहसा ।
कुम्भीसंभवनामकेन मुनिना सर्वार्थसंदर्शिना
को वा स्यादपशब्दतामिह महाभाष्यार्थवेत्ता वदेत् ।

विश्वगुणादर्शकारः [1]कावेरीं तज्जलस्पर्शसंवन्धवायुप्रशंसाव्याजेन वर्णयति तथैव [2]वैकुण्ठविजयचम्पूकारोऽपि ।

यादवाद्रिक्षेत्रवर्णनावसरे तच्छिखरारूढो भगवान् नारायाणः यथा [3]विश्वगुणादर्शे उपवर्णितः तथैव [4]वैकुण्ठविजयेऽपि ।

---

शठमथनमुनीन्द्रो निस्तुलानन्दसान्द्रो
विनतकुमुदचन्द्रः श्रीशनुत्यामतन्द्रः ।
बकुलमुकुलभूषोऽचिख्यपत्सर्वलोका-
न्नियतमनुजिघृक्षुर्द्रामिडीं संहितां ताम् ॥
(वैं० वि० च० श्लो० १२०, १३०, १३१)

१. कल्हारोत्पलतल्लजोल्ललनवत्कल्लोलनिर्लोलन-
क्रीडापाटवगाढरूढहिमतासौरभ्यविभ्राजितः ।
कावेरीसलिलावगाहरसिकः कस्यैष नेद्यो मरुत्
क्लान्तानां पुनरध्वनीनवपुषां यन्निर्धुनीते श्रमम् ॥
(विश्व० श्लो० ३८६)

२. फुल्लद्वल्लकतल्लजोल्ललनवत्कल्लोलनिर्लोलित-
स्वर्लोकोल्लसदब्जवृङ्मणिगणस्रग्भारविभ्राजिता ।
एषाऽखण्डकवेरजाऽखिलजगद्दोषापहारोद्यता
केषामर्हति न स्तुतिं क्षितितलेऽशेषाभिमान्या स्वयम् ॥
(वैं० वि० च० १९२)

३. दुरितमवनतानां दुर्निरोधं निरुन्धन्
सितमतिभिरतन्द्रैः सेव्यमानो मुनीन्द्रैः ।
यदुगिरिरयमिन्धे यत्र नारायणात्मा
विलसति किल हर्षं नीलमेघः प्रवर्षन् ॥
(विश्व० श्लो० १७०)

४. यदुगिरिरयमिन्धे यत्र नारायणोऽसौ
यतिपरिवृढमुख्यैर्योगिभिस्सेव्यमानः ।
यजनविधिधुरीणैः यज्वभिस्स्तूयमानो
यमनियमविशेषैः यत्नतोऽपास्तदोषैः ॥
(वैं० वि० च० श्लो० २०७)

गङ्गानदीप्रशंसाप्रसङ्गे [1]संसारतापविनाशिनी, श्रीमन्नारायणचरणारविन्द-जन्या, स्वच्छतरङ्गा, समुद्रसंगा, अघौघविध्वंसिनी इति विश्वगुणादर्शकारोक्ता रीतिरेव [2]वैकुण्ठविजयचम्पूकारेणाप्यश्रिता ।

श्रीमता वेङ्कटाध्वरिणा अयोध्यानगरप्रशंसाप्रसङ्गे तत्रत्यरामदेवता[3] 'अनु-प्रासेनाभिवन्दिता । तथैव राघवाचार्येणापि अयोध्यानगरवर्णनावसरे सा नगरी एव[4] अनुप्रासेन प्रस्तुता ।

---

१. शिथिलितभवखेदा श्लिष्टवैकुण्ठपादा
कृतविपदपनोदा क्लृप्तचित्तप्रसादा ।
विमलतरतरङ्गा विश्रुताम्भोधिसङ्गा
विहितदुरितभङ्गा वीक्ष्यतामत्र गङ्गा ॥
(विश्व० श्लो० ७४)

२. विहितदुरितभङ्गा वीतरागैकसङ्गा
विहृतिपररथाङ्गा विष्णुपादानुषङ्गा ।
पृथुलतरतरङ्गा प्राप्तशर्वोत्तमाङ्गा
प्रवहति भुवि गङ्गा प्राणिरक्षान्तरङ्गा ॥
(वै० वि० च० श्लो० २६२)

३. कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा
काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा ।
सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गदामा
दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥
(विश्व० श्लो० ३८)

४. रामाधिकप्रथितभूमामहिष्टगुणसीमा हि कोसलदरी
कामान्तकत्रिदिवधामाधिपप्रभृतिवैमानिकैः सुमहिता ।
भूमावनन्यजनसामान्यनित्यसुखकामाश्रिता विजयते
हेमाग्रबद्धगृहसामान्यचारुतरधामावभासितदिशा ॥
(वै० वि० च० श्लो० २३२)

किं च श्लेषमूलकव्याजस्तुतिर्यत्रोपात्ता [१]विश्वगुणादर्शकर्त्रा तथैव [२]वैकुण्ठविजयचम्पूकारेणापि उपात्ता ।

अपि च श्रीरङ्गनगररङ्गनाथमन्दिरस्थवैनतेयवन्दनावसरे यादृशं (इन्दुवदनाख्यं) छन्दः प्रयुक्तं [३]विश्वगुणादर्शप्रबन्धा तादृशमेव छन्दः तत्प्रस्तावे [४]वैकुण्ठविजयचम्पूकारेणापि प्रयुक्तम् ।

किं च श्रीमता वेङ्कटाध्वरिणा छान्दोग्योपनिषदुक्तं [५]"यथाक्रतुरस्मिंल्लोके

---

१. येषां जनिश्चरणतस्तु हिरण्यहन्तु-
दोषाकरेण गुरुदारविटेन मूर्ध्नि ।
ब्रह्मोत्तमाङ्गभिद एव सहस्थितिश्च
ख्यातो लयो जलनिधौ किल गाङ्गवाराम् ॥
(विश्व० श्लो० ७५)

२. गङ्गा सभङ्गा जडधीष्टसङ्गा
कपालिनोऽङ्गे कलितानुषङ्गा ।
सुरापगेति प्रथिता कथं नु
तोष्टूयतेऽसौ भवता निकामम् ॥
(वै० वि० च० श्लो० २६४)

३. उग्ररिपुनिग्रहपविग्रहदिवौकश्चक्रवृतशक्रवृतशमदविक्रमनिहन्ता ।
मोदरसमादरसमेत इह पूर्णः प्रक्षिपतु पक्षिपतिरक्षियुगले मे ॥
(विश्व० श्लो० ४३१)

४. सर्पकुलदर्पहरसर्पणसलज्जाहर्पतिकगीर्पतिनुतार्पय कटाक्षम् ।
पापमभितापकरमापदमपि त्वं श्रीपतिरथापनुद भूप विहगानाम् ॥
(वै० वि० च० श्लो० १७३)

५. ब्रह्मसूत्रभाष्यादिषु उपनिषदुक्ताः दहरादयो विद्या अनेकाः उपासनायोपात्ताः मोक्षप्राप्तये । तत्र यां विद्यामाश्रित्य इह परं ब्रह्म उपास्ते चेतनः, सः फलावस्थायामपि परत्र तथैवानुभवति इति श्रुतेरर्थः ।

पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुन्यायमवलम्ब्य [1]बुद्धिमान् जनः इह भागीरथीं स्नानादिना संसेव्य स्वर्गे लोके देवो भूत्वा सुधायां भागवान्, विमानयुक्तश्च भवति इति भागी रथी इति पदाभ्यां सूचयन् अर्थगर्भितं पद्यमेकं व्यरचि। तथैव राघवाचार्येणापि [2]यादवाद्रिक्षेत्रस्थितकल्याणीसरस्संसेवनेन पुरुषः कल्याणी भवति इति तत्क्रतुन्याय उपात्तः।

एवं सर्वांशेन वेङ्कटाध्वरिणमनुसरता वात्स्यराघवाचार्येण [3]प्रकृतकाव्यनिष्पादने केवलगुरुभक्तिरेव हेतुः न तु काव्यलक्षणग्रन्थादिपूक्तशक्तिनिपुणताभ्यासा इति गुरुभक्तिरचञ्चला न्यरूपि।

इदानीं राघवाचार्यस्यैतद्ग्रन्थप्रणेतुः, सकललोकसंभावनीयस्य विश्वातिशायिनो विश्वामित्रगोत्रभूषणस्य विशुद्धविद्याविहारपुण्डरीकस्य पुण्डरीकाक्षसोमसुत्संभवस्यानन्तगुणशेवधेरनन्तसूरेरात्मसंभवे श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदे कवितार्किकसिंह इति प्रख्यातगुणसमाख्ये छात्रजननिबद्धजैत्रध्वजप्रसाधितदशदिशासौधे सर्वतन्त्रसङ्कट-

---

१. भागीरथीं यः पटुधीरुपास्ते
यथाक्रतुन्यायत एष धन्य.।
देवत्वमेत्य त्रिदिवे सुधायां
भागी रथीति व्यपदेशमेति॥
(विश्व० श्लो० ७९)

२. कल्याणीभजनान्मर्त्यः कल्याणी भवति ध्रुवम्।
तत्क्रतुन्याययाथात्म्यमत्रैव प्रकटीकृतम्॥
(वें० वि० च० श्लो० २११)

३. शक्त्यादित्रितयं मिथस्समुदितं काव्योद्भवे कारणं
निर्णीतं खलु काव्यविद्भिरखिलैर्व्यर्थं तदेतद्यतः।
भक्तिः श्रीनिधिसंयमीन्द्रगुरुराट्पादाब्जयुग्मेऽनघा
त्वेका हेतुरभूदुदग्रमहिमा मत्काव्यनिष्पादने॥
(वें० वि० च० श्लो० २३)

प्रशमनविशङ्कटमतौ श्रीमद्वेङ्कटनाथेऽपि अप्रकम्प्या भक्तिर्भवति । यथा दिव्यक्षेत्रादिषु विराजमानभगवद्दिव्यमङ्गलविग्रहेषु यादृशं चिन्तनं श्रीमन्निगमान्तमहादेशिकानामासीत् तथैव चतुस्तन्त्रपारावारपारीणस्य राघवाचार्यस्यापि आसीत् इति तद्भक्तिपरिणाममेवात्र कारणं मन्यामहे वयम् । श्रीमन्निगमान्तदेशिकचरणैः भगवद्विषयकाणि बहूनि स्तोत्राणि कृतानि । तत्र भगवद्दिव्यमङ्गलविग्रहध्यानविषयकं भगवद्ध्यानसोपानमिति स्तोत्रमेकम्, अपरं भगवतो दशावतारपरकं दशावतारस्तोत्रमिति स्तोत्रद्वयं प्रसिद्धम् । इदं स्तोत्रद्वयं तथैव राघवाचार्येण प्रकृतग्रन्थे कृतमिति तदत्र पाठकानां मोदाय समुदीर्यते ।

तत्रादौ भगवद्ध्यानसोपाने पादावयवानुसन्धानम्—

वेलातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं
प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः
पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥
(भग० श्लोक २)

संचिन्तयामि सततं पुरुषोत्तमस्य
पादारविन्दमरविन्दभवादिवन्द्यम् ।
त्रय्यन्तयुग्मनिवहैः परिमृग्यमाणं
दुर्दान्तमन्धतमसं नमतां धुनानाम् ॥
(वै० वि० च० श्लोक २७)

### जान्ववयववर्णनम्

चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां
काले दूरयद्रुततरगतिं कान्तिलीलाकलाचीम् ।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा
जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥
(भग० श्लोक ३)

जानुद्वयं जगदघौघतमोविमोक्षे
भानुं स्वयं समुदितं जगतां जनन्या ।
लक्ष्म्या परं करसरोजयुगेन नित्यं
संलालितं मुररिपोः सततं स्मरामि ॥
(वै० वि० च० श्लोक ३०)

### ऊरुद्वयवर्णनम्

कामारामास्थिरकदलिकास्तम्भसंभावनीयं
क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम् ।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं
लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः ॥
(भग० श्लोक ४)

ऊरू भुजे भगवतो मधुमर्दनस्य
चारू सुमृष्टहरिनीलशिलाभिरामौ ।
भास्वन्महार्हमणिकान्त्यनुरूपकाञ्ची-
विद्योतितौ जलधिजाललितोपधाने ॥
(वै० वि० च० श्लोक ३१)

## नाभिवर्णनम्

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता
गम्भीरत्वात्क्वचन समये गूढनिक्षिप्तविश्वा ।
नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा
रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥

(भग० श्लोक ५)

नानाविधात्मकचरस्थिरवर्गसर्ग-
विख्यातवैभवचतुर्मुखजन्मदेशम् ।
लक्ष्मीविहारकुहरायितमत्यगाधं
नाभीपुटं भगवतः कलयेम चित्ते ॥

(वै० वि० श्लोक ३२)

## वक्षस्स्थलवर्णनम्

श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं
मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसी चित्रया वैजयन्त्या
सन्तापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥

(भग० श्लोक ६)

मध्ये विद्युत्स्फुरणरुचिरं सान्द्रनीलाम्बुवाहं
मध्योदञ्चत्कनकलतिकाशोभिनीलाचलेन्द्रम् ।
तप्तस्वर्णप्रतिमकमलातन्वभिख्याभिरामां
वक्षः पीठीमनुविदधतीं वासुदेवस्य वीक्षे ॥

(वै० वि० श्लोक ३४)

## हस्तद्वयवर्णनम्

एकं लीलोपहितमितरं बाहुमाजानुलम्बं
प्राप्ता रङ्गेशयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां
चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥

(भग० श्लोक ७)

नित्यासक्तं निखिलजगतां रक्षेण राजमानं
दैत्यानीकव्रजविलयकृच्छङ्खचक्राभियोगात् ।
दैत्यारातेर्जगदभयदं दोर्युगं सज्जनाना-
मत्यासन्नं स्फुरतु सततं मानसे मानसेवुः ॥

(वै० वि० श्लोक ३३)

अत्रेदं वक्तव्यम् — भगवद्भाष्यकारैः श्रीमद् रामानुजाचार्यचरणैः 'गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' (वे० सं) इति सरसचारुगद्येन यद्ग्रथितं तदेव पुण्डरीकाक्षाक्षिवर्णनावसरे प्रकृतग्रन्थकर्तृभिः—

'गम्भीराम्भस्समुदितमहानालसौगन्ध्ययुक्त-
प्रोद्यद्भास्वत्किरणविकसत्पद्मपत्रायतन्तत् ।

नेत्रद्वन्द्वं निखिलजगतां शर्मदं निर्मलानां
नेत्रद्वन्द्वं भवभयहरं भावये भक्तबन्धोः ।।'

(वै० वि० श्लोक ३७)

इति पद्येन संगृहीतमिति ।

## वदनवर्णनम्

साभिप्रायस्मितविकसितं चारु बिम्बाधरोष्ठं
दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकाऽलङ्कृतं रङ्गभर्तुः
स्वान्ते गाढं मम विलगति स्वागतोदारनेत्रम् ।।

(भग० श्लोक ८)

राकाचन्द्रप्रतिमसुषुमं राजितं मन्दहासै-
र्दन्तैः कुन्दैरिव सुरुचिरैर्मण्डितं कुण्डलाभ्याम् ।
भ्राम्यद्भृङ्गप्रसवभरितैः कुन्तलैर्गण्डलोलैः
मुग्धं श्रीमन्मुखसरसिजं भावयेयं मुरारेः ।।

(वै० वि० श्लो० ३६)

## किरीटवर्णनम्

माल्यैरन्तस्स्थिरपरिमलैर्वल्लभास्पर्शमान्यैः
कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे
राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ।।

(भग० श्लोक ९)

प्रत्नै रत्नैः प्रगुणरुचिभिः प्रोद्यमानारुणाभिः
भाभिस्स्वाभिस्सकलभुवनं भासयद्भिर्विदीप्तम् ।
दिव्यैः कल्पद्रुमनवसुमैः भूषितं दिव्यगन्धै-
र्दैत्यारातेर्वयमनुकलं मौलिमालोकयाम. ।।

(वै० वि० श्लोक ३८)

इदमत्रावधेयम् — भगवद्रामानुजाचार्यचरणैः 'तप्तकार्तस्वरगिरिवरप्रभः सहस्रांशुशतसहस्रकिरणः गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः सुभ्रूललाटः सुनासः सुस्मिताधरविद्रुमः सुरुचिरकोमलगण्डः कम्बुग्रीवः समुन्नतांसविलम्बिचारुरूपदिव्यकर्णकिसलयः पीनवृत्तायतभुजः चारुतराताम्रकरतलानुरक्ताङ्गुलीभिरलङ्कृतः तनुमध्यः विशालवक्षस्स्थलः समविभक्तसर्वाङ्गः अनिर्देश्यदिव्यरूपसंहननः स्निग्धवर्णः प्रबुद्धपुण्डरीकचारुचरणयुगलः स्वानुरूपपीताम्बरधरः अमलकिरीटकुण्डलहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमिताश्चर्यानन्तदिव्य -

भूषण: शङ्खचक्रगदासिशार्ङ्गश्रीवत्सवनमालालङ्कृतः अनवधिकातिशयसौन्दर्याहृताशेषमनोदृष्टिवृत्तिः लावण्यामृतपूरिताशेषचराचरभूतजातः अत्यद्भुताचिन्त्यनित्ययौवनः पुष्पहाससुकुमारः पुण्यगन्धवासितानन्तदिगन्तरालः त्रैलोक्याक्रमणप्रवृत्तगम्भीरभावः करुणानुरागमधुरलोचनावलोकिताश्रितवर्गः पुरुषवरः' (वे० सं) इति भगवतो दिव्यरूपं ब्रह्मसूत्रकाराभिमतं यद्भाषितं तदेव मूलकारणं भगवदवयवानुभवप्रवृत्तयोः श्रीमन्निगमान्तमहादेशिक-श्रीमद्राघवाचार्ययोरिति।

संप्रति निखिलजगदुदयविभवलयलीलस्य निरस्तसमस्तहेयस्य समस्तकल्याणगुणामृतोदधेः स्वेतरसमस्तवस्तुविलक्षणस्य परब्रह्मणो नारायणस्य आश्रितजपरिरक्षणाय परिगृहीतेषु विविधावतारेषु गुरुवरयोरुभयोः मत्स्यादिदशावतारविषयकोऽनुभवः सहृदयानां पुरतः समुपस्थाप्यते—

### मत्स्यावतारवर्णनम्

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै-
रन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम्।
निष्प्रत्यूहतरङ्गरिङ्खणमिथः प्रत्यूढपाथश्छटा-
होलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः॥
(दशा० श्लोक २)

निर्मग्नमन्तरुदधेर्निखिलागमौघ-
मुद्धृत्य पद्मनिलयानिलयायितोराः।
कार्यविबोधरहिताय चतुर्मुखाय
योऽदात्स मामवतु मत्स्यवपू रमेशः॥
(वै० वि० श्लोक १८२)

### कूर्मावतारवर्णनम्

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः।
यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोलपर्यङ्किका-
नित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया॥
(दशा० श्लोक ३)

कण्डूयनेन गिरिणा गुरुणा सुखेन
निद्राजुषः कमठरूपधरस्य विष्णोः।
निःश्वासवातलहरी विवरीवरीति
विज्ञानरीतिमसतः प्रजरीहरीति॥
(वै० वि० श्लोक १८३)

### वराहावतारवर्णनम्

गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत-
ब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः।

घोणारवेण महता वहता महांह-
स्तोमं पवित्रितजगत्त्रितयो वराहः।

यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थिति-
र्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वम्भरा ।।

(दशा० श्लोक ४)

मुस्तामिव क्षितिमुदस्तसमस्तहेयो
यस्तामुदक्षिपदसौ मम भूतिदः स्यात् ।।

(वै० वि० श्लोक १८४)

## नरसिंहवतारवर्णनम्

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजै-
रव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां
या काचिन्महसा महासुरगृहस्थूणा पितामह्यभूत् ।।

(दशा० श्लोक ५)

सोऽव्यात् श्रियःपतिरुपेत्य वपुर्विचित्रं
मायेदमित्यरिषु संभ्रमनावहद्यः ।
प्रह्लादरक्षणमहाव्रतपूर्तिकामो
नूनं स्वयं वितनुते स्म हिरण्यदानम् ।।

(वै० वि० श्लोक १८५)

## वामनावतारवर्णनम्

व्रीडाविद्धवदान्यदानवयशोनासीरघाटीभट-
स्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः
स्रोतोभिस्सुरसिन्धुरष्टसु दिशा सौधेषु दोधूयते ।।

(दशा० श्लोक ६)

याच्ञाविधेः प्रथमतः परिशीलनेन
खर्वीभवन्निजवपुस्त्रपयेव नाथः ।
योऽनुग्रहात्सुरगणेषु बलिं न्यगृह्णात्
तत्तावृशं स हृदि मे स्थितिमातनोतु ।।

(वै० वि० श्लोक १८६)

## परशुरामावतारवर्णनम्

क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमा-
दक्षत्रामपि सन्ततक्ष य इमां त्रिस्सप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वस-
न्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ।।

(दशा० श्लोक ७)

मान्याः क्षमाभृत इति स्मरणात्क्षमाभृ-
न्निर्मूलनं कृतमयुक्तमिदं ममेति ।
निर्वेदयोगत इव क्षितिमुज्जिहानो
योऽभ्येत्य सिन्धुमवसत् स ममास्तु भूत्यै ।।

(वै० वि० श्लोक १८७)

## श्रीरामावतारवर्णनम्

पारावारपयोविशोषणकलापारीणकालानल-
ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।

श्रुत्वावतारमवनौ किल यस्य देवाः
स्वस्थाःस्त्रियस्सुरुच्चयो मुनयस्स्थिराशाः ।

सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती
धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ।।
(दशा० श्लोक ८)

रक्षांस्यसंसत च भूतनयापराधा-
द्वेतोर्वधिष्यति हि नस्त्विति पातु सोऽस्मान् ।।
(वै० वि० श्लोक १८८)

## बलरामावतारवर्णनम्

फक्कत्कौरवपत्तनप्रभृतयः प्रास्तप्रलम्बादयः
तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणै-
राकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ।।
(दशा० श्लोक ९)

चित्तं यदीयमभजत्किल कृष्णभावं
यन्नेत्रमप्युदवहद्बत कृष्णभावम् ।
यस्याधिका मधुरुचिर्मधुवैरिणोऽपि
सोऽयं मुदे भवतु मे जगदेकवीरः ।।
(वै० वि० श्लोक १८९)

## श्रीकृष्णावतारवर्णनम्

नाथायैव नमः पदं भवतु नश्चित्रैश्चरित्रक्रमै-
र्भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकायकालियफणिस्फारस्फटावाटिका-
रङ्गोत्सङ्गविशङ्कचंक्रमधुरापर्यायचर्यायते ।।
(दशा० श्लोक १०)

यः सर्वदा मुनिजनानपि वीतरागान्
गीतानुरक्तहृदयानकरोद्विचित्रम् ।
यत्पादपल्लवनिवेशितचित्तवृत्ति
र्गोपीजनः प्रियरुचि न बभार सोऽव्यात् ।।
(वै० वि० श्लोक १९०)

## कल्क्यवतारवर्णनम्

भाविन्या दशयाभवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलंकषः ।
निश्शेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ।।
(दशा० श्लोक ११)

तुङ्गस्तुरङ्गवपुरङ्ग रथाङ्गपाणि-
र्भङ्गं करिष्यति कलेरविभङ्गवीर्यः ।
तं गाहतां मम सदाञ्जलिरङ्गनाङ्ग-
संगेषु दूरगमसंगजनान्तरङ्गम् ।।
(वै० वि० श्लोक १९१)

## मातृकाविवरणम्

महामहिमशालिनोऽस्य गम्भीरप्रबन्धस्य वैकुण्ठविजयचम्पूग्रन्थस्य तिस्रः मातृका उपलब्धाः। तत्र इतः अशीतिसंवत्सरात्प्राक्[1] ग्रन्थाक्षरलिप्यां मुद्रितः जर्जरितः मातृकातुल्यः पुराणः मुद्रितग्रन्थः एकः। अयं च कुम्भघोणपरिसरे देवनार्विलाकाख्ये ग्रामे वासं कुर्वतां परमैकान्तिनां उभयवेदान्तविदुषां एम्० ए० बी० एल्० उपाधिधारिणां पि० एस्० श्रीनिवासदेशिकाचार्याणां भवति। अयं 'क' संज्ञया व्यवहृतः।

द्वितीया [2]मद्रास् राजकीय-प्राच्य-कोशागारे वर्तमाना D. 12374 संख्याङ्किता, तालपत्रमयी, त्र्यशीतिपृष्ठोपेता, ग्रन्थाक्षरलिखिता, प्रतिपृष्ठं षट्पङ्क्तिसहिता, कीटजग्धा, अपूर्णा। इयं 'ख' संकेतेन व्यपदिश्यते।

तृतीयापि[3] उपर्युक्तस्थल एवोपलभ्यमाना D. 12375 संख्याङ्किता, कर्गजपत्रमयी, त्रिपञ्चाशत्पृष्ठोपशोभिता, ग्रन्थाक्षरलिखिता, प्रतिपृष्ठं द्वाविंशतिपङ्क्त्युपेता, अपूर्णा। इयं 'ग' संज्ञया च प्रोच्यते।

### वैकुण्ठविजयचम्पूव्याख्या - विजयपताका

श्लेषादिगर्भितस्य व्याख्यासापेक्षस्य वैकुण्ठविजयचम्पूग्रन्थस्यावबोधाय टीकान्वेषणपरेण मया मूलग्रन्थदातुः श्री० उ० वे० श्रीनिवासदेशिकाचार्यस्य सकाशादेव काचिट्टीका समुपलब्धा। किन्तु सा अपूर्णा, केवलमाद्यपद्यस्य मात्रं व्याख्या अस्ति। उपरितनभागस्य व्याख्यातृणा टीका कृता न वेति निर्णेतुं किमपि प्रमाणं नोपलभ्यते।

टीकेयं प्राचीनकाकलपत्रे दीर्घे षट्पुटेषु सप्तत्रिंशत्पङ्क्तिषु प्रतिपङ्क्ति विंशतिभिरक्षरैः ग्रन्थलिप्याऽङ्किता। पत्रस्य चतुर्षु भागेषु भुग्ना, कीटजग्धा, अस्पष्टवर्णा, अत एव पठितुमशक्या चास्ति।

---

1. कुम्भघोणस्थ-वैदिकवर्धिनी-मुद्राक्षरशालायां पराभवसंवत्सरे धनुर्मासि श्रीनिवासाचार्येण संपाद्य मुद्रापिता।
2. Government Oriental Manuscript libry, Madras. Descriptive Catalouge vol. No XXI Pp. 8298-8301.
3. ibid p. 8301.

अस्याः टीकायाः नाम, तत्कर्तृज्ञानायास्तोकं प्रयासं विधाय 'विजयपताका' इति टीकायाः नाम,

> 'अथापि तत्प्रशिष्य...तातपादकटाक्षतः ।
> तत्पोतृच्छात्रगो...वेङ्कटेशसमाह्वयः ॥
> वैकुण्ठविजयाभिख्यां व्याख्यास्ये श्रीहरेर्मुदे ॥'

इत्यस्पष्टापूर्णश्लोकेन टीकाकर्ता वेङ्कटेश इति चावगम्यते ।

टीकाकारस्य वेङ्कटेशाचार्यस्य गुरुः

> 'ससोदर्यो मम ज्येष्ठः महागुरुरुदारधीः ।
> चक्रवर्तिरामभद्राचार्यार्योऽस्तु मे हृदि ॥'

इति श्लोकेन ज्येष्ठभ्राता एवेति निश्चीयते ।

इमे वेङ्कटेशाचार्याः व्याकरणवेदान्तादिशास्त्रेषु कृतभूरिपरिश्रमाः इति व्याख्यादर्शनेन स्फुटं भवति । परं तु दौर्भाग्येनास्माकं पूर्णा टीका नोपलब्धेति भृशं चेतो रोदिति । यावान् टीकाभाग उपलब्ध तावन्तं भागं वाचकानां तोषाय प्रकाशयितुमभिलषतापि अस्पष्टाक्षरलेखनभग्नकीटजग्धादिदोषग्रस्तत्वात् न प्रकाशित इति क्षामणीयोऽयं जनः ।

**कृतज्ञतानिवेदनम्**

निलिखितन्त्रपारावारपारीणश्रीमद्राघवाचार्यसमनुगृहीतस्य श्लेषयमकप्रासादिशब्दालङ्कारगर्भितस्य अकुण्ठमहिमवैकुण्ठनाथोत्कर्षोपपादकप्रबन्धश्रेष्ठस्य देवनागरिलिप्यामद्य यावदप्रकाशितस्यास्य वैकुण्ठविजयचम्पूग्रन्थरत्नस्य प्रकाशनार्थमनुमतिं दत्तवद्भ्यः दिल्लीस्थराष्ट्रियसंस्कृतसंस्थाननिदेशकवर्येभ्यः **डा० मण्डनमिश्रमहोदयेभ्यः** धन्यवादान् विनिवेदयामि ।

एतद्ग्रन्थसम्पादनभारं मयि परमप्रेम्णा निक्षिप्तवद्भ्यः एतादृशोत्तमग्रन्थप्रकाशनकर्मणि बद्धदीक्षेभ्यः एतद्विद्यापीठीयप्राचार्येभ्यः **डा० गयाचरणत्रिपाठीमहाभागेभ्यः** हार्दं कार्तज्ञ्यं समर्पयामि ।

ग्रन्थस्यास्य ग्रन्थाक्षरमुद्रितं प्राचीनं पुस्तकं समनुगृह्य प्रकाशनाभिरुचिं च समुत्पादितवद्भ्यः उभयवेदान्तविद्वद्भ्यः **श्रीनिवासदेशिकाचार्यस्वामिभ्योऽनन्तनतिततीः** विनिवेद्यात्मानं धन्यं मन्ये ।

प्रकृतग्रन्थकर्तू राघवाचार्यस्य समयकृत्यन्तरादीनां विषयेऽविज्ञाततत्त्वस्य मे उपर्युक्तविषयोद्घाटनपरकं श्रीमदहोबिलमठास्थानगुरुपरम्पराग्रन्थं प्रदाय तच्छङ्कां दूरीकृतवद्भ्यः अस्मन्मातुलेभ्यः उभयवेदान्तमीमांसाशास्त्रविद्भ्यः गोष्ठीपुराभिजनेभ्यो **रामानुजाचार्येभ्यः** करणत्रयेण प्रणामं समर्पयामि ।

प्रकृतग्रन्थमुद्राणालयपाण्डुलिपिं (Press Copy) अवलोक्यास्माकं शङ्कां कृपयोच्चाटितवद्भ्यः अस्मन्मित्रवर्येभ्यः इदानीं जम्मूस्थ-रणवीरकेन्द्रीयसंस्कृतविद्यापीठप्राचार्यपदमधितिष्ठद्भ्यः आशुकविभ्यः **डा० जगन्नाथपाठकमहाभागेभ्यः** तथा श्लोकसूची-प्रूफ्शोधनादिव्यापारेषु सदयं साहाय्यमाचरितवद्भ्यः सुहृद्भ्यः एतद्विद्यापीठसाहित्यविभागे प्रवाचकपदमधितिष्टद्भ्यो **डा० गोपराजुरामभहोदयेभ्यश्च** अनन्तान् धन्यवादान् अकपटेन मनसा निवेदयामि ।

मद्रास् - राजकीयप्राच्यहस्तलिखितकोशागारस्थमातृकाभ्यां सह पाठभेदसंकलनावसरे निसर्गसौहार्देनागत्य मातृकापठनादिकार्यकलापेषु साहाय्यं कृतवते **डा० पद्मनाभाचार्याय** ( Research Officer, French Institute, Pandichery ), तथा वैकुण्ठविजयचम्पूमातृकाद्वयदर्शनायानुमतिं दत्तवद्भ्यः उपर्युक्तहस्तलिखितकोशागाराधिकारिभ्यश्च कार्तज्ञ्यं प्रकटयामि ।

समुचितसमये सुष्ठु ग्रन्थरत्नमिदं मुद्रापितवद्भ्यः **श्रीउपेन्द्रत्रिपाठी-महाशयेभ्यश्च** धन्यवादानर्पयामि ।

पुरुषगतभ्रमप्रमादाज्ञानादिमलजन्यः ग्रन्थगतास्त्रुटयः कृपया सोढव्याः ज्ञानाढ्यैः सहृदयैरिति विनिवेद्य ग्रन्थरत्नमिदं वेणीमाधवचरणारविन्दयोः सप्रश्रयं समर्पयति ।

अक्षय-तुला-शुक्ल-चतुर्थी
05-11-1986

सुधीजनविधेयः
**का० इ० गोविन्दन्**
(न्यायवेदान्तविद्वान्, योजनाधिकारीच)

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

## श्रीराघवार्यविनिर्मिता

# वैकुण्ठविजयचम्पूः

### लक्ष्मीनारायणवन्दनम्

श्रियःपत्यौ पत्यौ निखिलजगतां निर्ममजनैः
निषेव्ये निस्तुल्ये निरवधिमहानन्दजलधौ ।
निराबाधैश्वर्ये निजपदनतव्रातसुलभे
भवादीनां भाव्ये भवतु मम भक्तिर्भगवति ॥१॥

### श्रीनृसिंहवन्दनम्

श्रीमानहोबिलगुहास्थितिमाननन्तः
त्रय्यन्तवेद्यनिजरूपगुणप्रभावः ।
प्रह्लादरक्षणकृते प्रथितावतारः
प्राग्भिः[1] स्तुतो नरहरिः प्रथयेत् धियं नः ॥२॥

### श्रीकृष्णवन्दनम्

कृष्णोऽप्यर्जुनभावभृद्विधुरपि प्रध्वस्तदोषान्वयः
सर्वज्ञत्वमुपेयिवानपि भवप्रत्यर्थिभावं श्रितः ।
गोपालोऽपि विधूतधेनुकबलो नित्योऽपिजन्माकुलः[2]
श्रीमान् कोऽपि विचित्रशक्तिपटली सीमा पुमानेधते ॥३॥

### श्रीरामवन्दनम्

कामोऽपि यत्तनुनिरीक्षणजन्यलज्जा-
व्यामोहितो निजतनुं विससर्ज नूनम् ।

---

१. प्राद्भिः ख ग ।     २. जन्याकुलः क ।

श्यामो नवाम्बुधरवत्समहानुभावो
रामो गुणैरनुपमैरभिराम इन्धे ॥४॥

लक्ष्मीवन्दनम्

कटाक्षैः कल्याणैः कलयतु रमा कामपि मुदं
त्रयीचूडाक्रीडासदनमिह यस्याः परमभूत् ।
दवीयस्यां यस्यां धनदनगरीकाननदरी
यदीक्षा[1]पेक्षं तद्भवति परमं ब्रह्मनियतम् ॥५॥

श्रीशठारिमुनिवन्दनम्

भवजलधिनिमज्जत्सज्जनोज्जीविनीभिः
फणितिभिरमलाभिः सर्वलोकोचिताभिः ।
परमपुरुषमस्तौत् निस्तुलं[2] यस्तु सोऽयं
शठमथनमुनिर्मे भूयसे श्रेयसे स्यात् ॥६॥

भगवद्रामानुजमुनिवन्दनम्

श्रीमान् रामानुजार्यो जयति यतिपतिः सर्वसिद्धान्तवेत्ता
दौर्मत्य[3]ध्वान्तकुक्षिंभरिहरि-चरण[4]प्रेमभूमोदिताभिः ।
फुल्लन्मल्लीमतल्लीमधुरमधुझरीमाधुरीसोदरीभिः
त्रय्यावैय्याकुलीं यः फणितिभिरनघोऽशीशमच्छ्रीशसेवी ॥७॥

निगमान्तदेशिकवन्दनम् .

नानादुर्वादिगर्वानलनवजलदः श्रीशघण्टावतारः
श्रीनाथोद्दामभक्तिप्रचयविलसितोऽत्यन्तदान्तस्वभावः ।
लूनान्त[5]र्ध्वान्तविद्वत्परिबृढमहिता-नेक[6]सद्ग्रन्थकर्ता
मानातीतस्वभूमा जगति विजयते वेदचूडार्यवर्यः ॥८॥

---

१. यदिक्षा ख ग ।
२. निर्मलं क ग ।
३. दौरात्म्य° ख ग ।
४. °चरणौ क ।
५. लुनान्त° ख ग ।
६. °नैक° ख ग ।

## आदिवण्शठकोपमुनिवन्दनम्

साक्षाल्लक्ष्मीनृसिंहो मुनिजनमहिताहोबिल-क्ष्माधरेन्द्र-
स्थेमासौ नित्यमुक्तप्रतिकलकलिताराधनादप्यतुष्टः ।
यस्मै दत्त्वा यतित्वं स्वयमिह मुदितो नैजसंराधनार्थं
सोऽयं श्रीवण्शठारिः वितरतु गुरुराड्वीप्सयाऽभीप्सितानि ॥९॥

## नारायणयतिवन्दनम्

किं व्यासः ? किं शुको वा ? किमु शठमथनः ? किं कयाधोस्सुतोवा ?
किं वा प्राचेतसः ? किं श्रुतिमुकुटपरिष्कारधीः लक्ष्मणार्यः ? ।
इत्युत्प्रेक्ष्यो विधूतप्रतिकथकघटाटोपघोराट्टहासः
श्रीमान् नारायणाख्यो यतिपतिरनघाश्चर्यचर्यो विभाति ॥१०॥

## श्रीनिवासयतिवन्दनम्

फक्कद्वाणीशवाणिः कणभुगभि-मतध्वान्त[1]सम्भ्रान्तचेत-
स्सिद्धान्तध्वान्तसौरद्युतिनिचयझरीविभ्रमोदभ्रमोदः ।
त्रय्यन्तान्तर्निगूढत्रियुगगुणगणोद्वर्णनैकान्तरङ्गः
पातु श्रीवासयोगी यतिपतिमतनिर्धारणायावतीर्णः ॥११॥

## रङ्गनाथयतिवन्दनम्

निर्बाधज्ञानसीमा निगममकुटनिष्णाततोद्दामभूमा
निर्धूतक्रूरकामादिमरिपुगरिमा निर्ममैर्गेयनामा ।
दुर्वादिव्रातभीमाऽतिशयितसुयशाः स्फीतपद्माक्षदामा
श्रीरङ्गाधीशनामा जयति यतिपतिः भास्वता तुल्यधामा ॥१२॥

## प्रपितामहवन्दनम्

यस्यासीत् प्रपितामहो बुधमणिः श्रीश्रीनिवासाख्यया
विख्यातो भुवि सर्वतन्त्रनिपुणः साहित्यपारीणधीः ।

---

१. °मतोध्वान्त ख ग ।

वैराग्येण गरीयसा प्रमुदितः श्रीमन्नृसिंहाज्ञया
प्राप्तः संयमितां प्रकृष्ट[1]सुधियामध्यात्मविद्यागुरुः ॥१३॥

पितामहवन्दनम्

श्रीमान् यस्य पितामहः कविवरः श्रीवेङ्कटेशाभिधो
निस्सीमप्रतिभो निरर्गलमतिः सर्वेषु तन्त्रेष्वपि ।
भूत्वा योगिवरो नृहर्यनुमतेः प्राप्तोऽखिलाचार्यतां[2]
विख्यातो नरसिंहमूर्तिरपरेत्याबालवृद्धं भुवि ॥१४॥

पितृवन्दनम्

तातो यस्य बुधाग्रणीः कविवरः श्रीश्रीनिवासाह्वयो
नानातन्त्रपरिश्रमः शमधनस्त्रय्यन्तविद्यानिधिः ।
वैराग्यातिशयेन सर्वविरतः श्रीमन्नृसिंहाज्ञया
संप्राप्तो यतिराजतां स जगदाचार्यो गुणैरेधते ॥१५॥

मातामहवन्दनम्

मातामहो यस्य महर्षितुल्यो
महानुभावो महनीयशीलः ।
आत्रेयवंशाम्बुधिपार्वणेन्दुः
आसीत् जगत्यां जपतां वरिष्ठः ॥१६॥

ग्रन्थकृन्नामप्रस्तावः

श्रीमच्छ्रीवासयोगीश्वरगुरुकरुणालम्भितज्ञानभूमा
श्रीरङ्गेशाख्ययोगीश्वरगुरुचरणाम्भोजलोलम्बवृत्तिः ।
सोऽयं वत्सान्ववायाम्बुधिहिमकिरणः साहितीषु[3] प्रवीणो
वैकुण्ठस्याभिधातुं विजयमनघमुज्जृम्भते राघवार्यः ॥१७॥

---

१. प्रतुष्ट° *ख ग* ।
२. °चार्यक° *क* ।
३. संहितेषु *ख ग* ।

तर्कालङ्कारभूतः फणि-फणिति[1]महाभाष्यपारीणबुद्धिः
तन्त्रे चापि स्वतन्त्रः श्रुतिमुकुटपरिश्रान्तकान्तान्तरङ्गः ।
काव्यालङ्कारवृत्तेष्वपि च[2] परि-चयात्[3] शिक्षितश्चार्थजाते
पौराणप्यैतिहासे भृशमिह विबुधैः ख्यायतेऽसौ कवीन्द्रः ॥१८॥

मलयमरुदुदञ्च-न्मल्लिका[4]मञ्जरीणां
मधुरमधुझरीणां सर्वदा सोदरीणाम् ।
अमृतसहचरीणा-मञ्जदृ[5]विकङ्करीणां
जयति कविवरस्यामुष्य वाचां विलासः ॥१९॥

काव्यं मामकमद्भुतं सुललितं[6] नव्यं रसैरुज्ज्वलं
भव्यं ह्लादमयं सदा हृदि लस-त्काव्यान्त[7]राणामपि ।
दिव्यं श्रीशकथामृतं मुनिजनैः स्तव्याक्षरन्निर्मलं[8]
श्राव्यं श्रीरमणाङ्घ्रिपङ्कजजुषां भाव्यं सुधीभिर्मुहुः ॥२०॥

काव्यानि पूर्वचरितान्युपजीव्य जाताऽ-
प्येषा मदीयकविता स्वदते गुणाढ्या ।
अम्भोनिधावुदितमप्यवलोक्य चन्द्रं
सर्वे जना भुवि भृशं[9] मुदिता भवन्ति ॥२१॥

प्राञ्चः स्युः कवयः प्रमत्तमतयो मत्तः प्रकृष्टाः परं
काव्यं कर्तुमपास्तदोषनिचयं ते चापि नालं स्वयम् ।
वक्तारोऽपि वयं च दोषजटिलं काव्यं न लज्जामहे
को भेदोऽस्ति हरेर्गुणौघ[10] गणने वाचां श्रुतीनामपि ॥२२॥

शक्त्यादित्रितयं मिथस्समुदितं काव्योद्भवे कारणं
निर्णीतं खलु काव्यविद्भिरखिलैर्व्यर्थं तदेतद्यतः ।

---

१. °फणित° ख ग ।
२. 'च' नास्ति क ।
३. °चयवान् क ।
४. °नलिका क ।
५. °मज्जदृ° ख ग ।
६. माकमदद्भुतं सललितं ख ग ।
७. °त्कव्यन्त° क ।
८. स्तव्यंक्षरन्निर्जलम् क ।
९. परं ख ग ।
१०. गिरेगुणौघ° क ।

भक्तिः श्रीनिधिसंयमीन्द्रगुरुराट्पादाब्जयुग्मेऽनघा
त्वेका हेतुरभूदुदग्रमहिमा मत्काव्यनिष्पादने ॥२३॥

सन्तो निशम्य निपुणं मम वाग्विलासं
सन्तोषमत्र कलयन्तु गताभ्यसूयाः ।
निन्दन्तु मन्दमतयो सम बृन्दशस्त—
त्तोषाय वा किमु भवेदथवा रुषे[1] स्यात् ॥२४॥

ग्रन्थप्रतिपाद्यविषयसूचनम्

विजयजयसमाख्यौ पूरुषौ हि त्रिलोकी-
चरितसमवगत्यै लोकसञ्चारकामौ ।
गुणतदितरजालग्राहिणौ तत्र चाद्यः
स्वसुकृतपरिपाकात् श्रीशभक्तो बभूव ॥२५॥

भगवदापादचूडाभिवन्दनम्

तत्र खलु निखिलजगदुदयविभवविलयनटनपटिमजटिलपरमपुरुषमहिमगरिमकथनविवश-निखिल[2]निगममकुट-सन्तत[3]मननसमधिगतसकलदिग्विजयो विजयः निष्प्रत्यूहं निखिललोक-संचरण[4]संपत्तये भगवन्तम् आपादचूडम् अभिध्यायति—

ध्यायाम्यहं भगवतश्चरणारविन्दं
संसारसागर-समज्जन[5]सज्जनानाम् ।
संतारणोचितदृढप्लवमुद्यदिन्दु-
संदोहसन्निभनखद्युतिभि-र्विभान्तम्[6] ॥२६॥

संचिन्तयामि सततं पुरुषोत्तमस्य
पादारविन्दमरविन्दभवादिवन्द्यम् ।

---

१. मुदे ख ग ।
२. 'निखिल' नास्ति ख ग ।
३. °सतत° ख ग ।
४. °संचारण° ख ग ।
५. °निमज्जन° क ।
६. 'विभातम् क ।

त्र्यन्तयुग्मनिवहैः परिमृग्यमाणं
दुर्दान्तमन्धतमसं नमतां धुनानम्[1] ॥२७॥

ध्यायेम काङ्क्षितफलं कमलासखस्य
पादाम्बुजद्वयमकिंचनभागधेयम् ।
यच्चिन्तनेन मुनयो धनयोगनिष्ठा
धूत्वा भवं पदमजस्रसुखं भजन्ति ॥२८॥

यन्निःसृतां सरितमभ्यवलोक्य धन्याः
सप्तर्षयः खलु वहन्ति जटाकुटीरैः ।
अभ्यागतामिव विमुक्तिमुदञ्चमानाः
तादृग्घरेः पदयुगं शरणं प्रपद्ये ॥२९॥

जानुद्वयं जगदघौघतमोविमोक्षे
भानुं स्वयं समुदितं जगतां जनन्या ।
लक्ष्म्या परं करसरोजयुगेन नित्यं
संलालितं मुररिपोः सततं स्मरामि ॥३०॥

ऊरू भुजे भगवतो मधुमर्दनस्य
चारू सुमृष्टहरिनीलशिलाभिरामौ ।
भास्वन्महार्हमणिकान्त्यनुरूपकाञ्ची
विद्योतितौ जलधिजा[2]-ललितोपधाने ॥३१॥

नानाविधात्मकचरस्थिरवर्गसर्ग-
विख्यातवैभवचतुर्मुखजन्मदेशम् ।
लक्ष्मीविहार-कुहरा[3]यितमत्यगाधं
नाभीपुटं भगवतः कलयेम चित्ते ॥३२॥

---

१. धुनानाम् क ।
२. जलधिजं ख ग ।
३. °मुहुरा° ख ग ।

नित्यासक्तं निखिलजगतां रक्षणे राजमानं
दैत्यानीकव्रजविलयकृच्छङ्खचक्राभियोगात् ।
दैत्यारातेर्जगदभयदं दोर्युगं सज्जनानाम्
अत्यासन्नं स्फुरतु सततं मानसे मानसेतुः ॥३३॥

मध्ये विद्युत्स्फुरणरुचिरं सान्द्रनीलाम्बुवाहं
मध्योदञ्चत्कनक-लतिका[1]शोभिनीलाचलेन्द्रम् ।
तप्तस्वर्णप्रतिम-कमला[2]तन्वभिख्याभिरामां
वक्षःपीठीमनुविदधतीं वासुदेवस्य वीक्षे ॥३४॥

कण्ठं शश्वत्कमलनिलयाकामुकस्य स्मरेयं
मुक्तादाम्ना परममहता मुग्धमुद्दामधाम्ना ।
कान्त्या वक्षः प्रविलसयतः कौस्तुभस्योपरिष्टात्
विभ्राजन्तं मृदुलतुलसीमालिका-शालिकाभिः[3] ॥३५॥

राकाचन्द्रप्रतिमसुषुमं राजितं मन्दहासैः
दन्तैः कुन्दैरिव सुरुचिरैः मण्डितं कुण्डलाभ्याम् ।
भ्राम्यद्भृङ्गप्रसवभरितैः कुन्तलैर्गण्डलोलैः
मुग्धं[4] श्रीमन्मुखसरसिजं भावयेयं मुरारेः ॥३६॥

गम्भीराम्भस्समुदितमहानालसौगन्ध्ययुक्त-
प्रोद्यद्भास्वत्किरण-विकस[5]त्पद्मपत्रायतन्तत् ।
नेत्रद्वन्द्वं निखिलजगतां शर्मदं निर्ममानां
नेत्रद्वन्द्वं भवभयहरं भावये भक्तबन्धोः ॥३७॥

प्रत्नै[6] रत्नैः प्रगुणरुचिभिः प्रोद्यमाना-रुणाभिः[7]
भाभिस्स्वाभिस्सकलभुवनं भासयद्भिर्विदीप्तम् ।

---

१. °तिलका° *ख ग* ।
२. °ललना° *ख ग* ।
३. °शालिकान्तिम् *ख ग* ।
४ 'मुग्धं' नास्ति *ख ग* ।
५. °विलास° *ख ग* ।
६. वृत्तै *ख ग* ।
७. °रुणाभैः *ख ग* ।

दिव्यैः कल्पद्रुमनवसुमैः भूषितं दिव्यगन्धैः
दैत्याराते: वयमनुकलं मौलिमालोकयामः ॥३८॥

भगवद्दूषणभूषणे

*जयः* — सखे महामायाविनम् एनं किम् अभिध्यायसि। पश्य अमुष्य कृत्यम्—

ज्ञानैकाकाररूपे स्थितवति विमले जीववर्गे निसर्गे
सृष्ट्वा स्त्रीपुंसभेदं भ्रमपरिजनकं मायया मेधयाऽसौ ।
ब्रह्मादीनप्यथर्षीन् भृशमिह विषये हन्त बंभ्रम्यमाणान्
कृत्वा दत्वाऽहमादिभ्रमर्मपि मुदितस्तेभ्य आस्ते मुरारिः ॥३९॥

*विजयः* — सखे परमपुरुषमहिमगरिमशकल[1]-कलनविधुरहृदय भगवति पुरुषोत्तमे भवदुदितं दूषणं दूनमादिभूपयुक्तमेव पर्यवसितं भवतो मतिमान्द्यमेवा[2]पादयति । पश्य—

यन्मायामोहितात्मानो ब्रह्मेन्द्रप्रमुखास्सुराः ।
तमेव पुरुषं साक्षात् परतत्त्वं प्रचक्षते ॥४०॥

बालः क्रीडनकैः यथा विहरति स्वैरप्रचारः तथा
नित्यप्राप्तनिरङ्कुशानघमहासंपत्सरिद्वल्लभः ।
स्वाच्छन्द्येन रमापतिः स्वयमसौ नानाविधैर्जन्तुभिः
क्रीडत्यङ्ग किमस्य दूषणमिदं भूषाविशेषायितम् ॥४१॥

जायन्ते सकलाः प्रजाः खलु यतो जीवन्ति येन त्विमाः[3]
तिष्ठन्ति ध्रुवमङ्ग यत्र यदिमाः[4] प्राणप्रयाणागमे ।
चित्ते यं विनिवेशयन्ति मुनयः संसारनिर्धूतये
यत्नेन क्षणमादरेण तमिमं को नाम निन्द्यात् भुवि ॥४२॥

पुनः भक्तिप्रकर्षेण भगवन्तं स्तौति—

१. 'शकल' इत्यधिकः *क* ।
२. 'मान्द्यत्वमेवा° *ख ग* ।
३. अखिलाः *ख ग* ।
४. य इमाः *ख ग* ।

सत्यं ज्ञानमनन्तमाद्यममलं नित्यं स्वयं ज्योतिषं
श्रुत्यम्भोनिधिपारदृश्वमतिभिः स्तुत्यं सुधीभिः सदा ।
नृत्यन्तं जगदुद्भवस्थितिलयैरत्यन्तनित्योन्नतं
श्रत्यन्तप्रथितात्मवैभवममुं नित्यं समीडीमहि[1] ॥४३॥

पीनात्मानुभवैः निरञ्जनजनैः लूनाभिमानाग्रहैः
नानावस्त्ववभासहीनहृदयैः ज्ञानाब्धिभिः सेवितम् ।
मानातीतविचित्रशक्तिनिवहं दीनावलीपालकं[2]
नानाभूतविकारनित्यरहितं श्रीनाथमेवाश्रये ॥४४॥

जयः — सखे निखिलसुरासुरनिवहविकटमकुटतटघटितविविधमणिगणकिरण-नीराजितचरणनलिनयुगलं प्रणतजननिचयविविधविपदुपचयहरणनिपुणं तत्तादृशमहिममहार्णवं भगवन्तं नीलकण्ठं विहाय किम् एनं वैकुण्ठम् एवादौ अभिध्यायसि । यः खलु—

मन्थानाचलमथ्यमानकलशोदन्वत्प्रसूतात् विषात्
लोकान् निर्दहतः सुरासुरगणान् भीतान् भृशं विद्रुतान् ।
नानादिक्षु विदिक्षु रक्षकजनालाभात् प्रपन्नान् स्वयं
दृष्ट्वा त्रातुमना मनाक् तदपिबत् कारुण्यमग्नाशयः ॥४५॥

किं च—

यद्गन्धाघ्राणमात्रात् त्रिदिववसतयः सेश्वरा यातुधानाः
सिद्धा यक्षाः पिशाचा अपि च सपतयो दानवा मानवाश्च ।
मूर्च्छामिच्छन्ति सर्वे तमखिलजगतां दुस्सहं कालकूटं
लीलामात्रेण कृत्स्नं पिबति भगवति प्रार्थयेत् को न भक्तिम् ॥४६॥

अपि च—

श्रीवासे हृन्निवासे दिशि विदिशि विधौ धावमाने विमाने
यक्षाध्यक्षे परोक्षे भ्रमति च वरुणे सज्वरे निर्जरेन्द्रे ।

---

१. तमीडीमहि क । २. दीनानलं पालकं ख ग ।

निर्भानौ चण्डभानौ वियति सभगणे निर्गुणे शूलपाणे-
रन्यः को वाऽम्बुराशेरुदितमिह गरं बाधते बाधतेजाः ॥४७॥

अपि च—

दृष्ट्वा निर्मथ्यमानात् कलशजलनिधेः कालकूटं समुत्थं
दुष्प्रेक्षं दुष्प्रधर्षं सरसिजनयनःस्वात्मसन्त्राणहेतोः ।
ध्यात्वोमां तत्प्रसादात् परमशिवमभिष्टुत्य सुस्वस्थ इत्थं
पौराणीमङ्ग वाणीं नियतमशृणवं तत्कुतः चिन्तितोऽयम् ॥४८॥

कैलासं स्वात्मवासं निजभुजचलनैः चालयन्तं महान्तं
रक्षोऽध्यक्षं य एको[1]ऽदमयदिह पदाङ्गुष्ठविन्यासमात्रात् ।
एकस्तं हन्तुकामः शरणमुपगतं वानरं वन्य-वृत्तिः[2]
भार्याहेतोः भृशार्तो [3]भ्रमशमदमनाः कस्तयोरुत्तमः स्यात् ॥४९॥

एकस्याङ्घ्र्यब्जसेवानवरतनिरतः कश्चिदुद्दामवीचिं
कात्स्न्येनाचामति स्म स्वकरतलगतं हन्त कृत्वा समुद्रम् ।
तत्तु तत्रैकदेशं शरणमुपगतस्तं समुद्रं बतैकः
कुर्वन् प्रायोपवेशं सबहुपरिकरः कस्तयोरुत्तमः स्यात् ॥५०॥

*विजयः*—सखे अनादिदुर्वासनादूषिताशेमुषीको भवान् निखिलजगदुदयविभव-विलयनटन-संततरसिकहृदयस्य[4], प्रणतजननिचयविविधविपदुपचय-भरितभवकदनदवदहनपरिशमनपरिकलनमहावलाहकस्य[5], अनवरत-तप्यमानतपोमहिमसमासादितपरावरतत्त्व -विवेक[6]महर्षिजनपरमदुर्लभ-परम-पुरुषार्था[7]भ्यर्थिजनसार्थमहावदान्यस्य, अनवधिकातिशयासंख्येय-

---

१. यमेको *ख ग* ।
२. वृत्ति *ख ग* ।
३. भृशमलमनाः *ख ग* ।
४. °सततहृदयरसिकस्य *ख ग* ।
५. 'प्रणत······वलाहकस्य' इत्यन्तो ग्रन्थस्त्रुटितः *ख ग* ।
६. °विवेकस्य *ख ग* ।
७. °पुरुषार्थस्य *ख ग* ।

कलयाणगुणगणमहार्णवस्य, निखिलनिगम-मकुट[1]जोघुष्यमाणमहिम-महानिकेतनस्य, प्रणिपतनचतुरचतुर्मुखपञ्चमुखषण्मुखप्रमुख-[2]बर्हिर्मुखकोटिकोटीरकोटीघटितस्फटिकमणिगणकिरणनीराजितपादपीठस्य, कलशजलधिदुहितृवदनकमलतरणिकिरणस्य, भगवतः, नारायणस्य महिमगरिमाणं सर्वथा अनवधारितवान् । पश्य—

अंशांशा यस्य विष्णोः त्रिजगदधिपतेरब्जयोनिस्त्रिनेत्रः
पाकारातिः प्रचेताः शमनधनपती मारुताग्न्यादयश्च ।
आज्ञां सम्यग्वहन्तः शिरसि सविनया[3] यत्कटाक्षप्रतीक्षाः
तस्मिन् संचिन्तितेऽस्मिन् परमखिलतनौ चिन्त्यमन्यत् किमस्ति ।।५१।।

सदा सदाराधितपादपङ्कजो
मुदामुदारावसथं जगन्मयः ।
हरिर्यदाराधनतोषिताशयः
समस्तमाराधितमेव तेन हि ।।५२।।

शितिकण्ठस्य कालकूटभक्षणेन माहात्म्य[4]कथनमपि वैकुण्ठस्य भगवतो नारायणस्यैव महिम्नि "प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम्" (श्रीगुण० श्लो० ३१) इति न्यायेन पर्यवस्यति[5] । तथा हि—

भूतव्रात-निघात[6]मब्धिमथनोद्भूतं प्रभूतं गरं
दृष्ट्वा श्रीरमणं त्रिलोकरमणं विश्वात्मभूतं स्मरन् ।
स्वस्ति स्वस्य च सर्वलोकविततेरिच्छन् प्रियां लालयन्
श्रीशप्रीतिकृते शिवस्तदपिबत् जातस्ततो निर्व्यथः[7] ।।५३।।

---

१. 'मकुट' नास्ति ख ग ।
२. °चतुरचतुर्मुख° इत्यधिकः ख ग ।
३. सवितयात् ख ग ।
४. 'कथनं' नास्ति ख ग ।
५. पर्यवसति ख ग ।
६. °निपात° ख ग ।
७. नित्यशः ख ग ।

श्रीमद्भागवतं महामुनिकृतं गीतं मुमुक्षूत्तमैः
आतङ्कं शमयत् भवार्णवभवं स्फीतं गुणैश्शान्तिदम् ।
उक्तार्थे प्रबलं प्रमाणमनघं जागर्ति नात्रान्यथा
शङ्कातङ्कलङ्कपङ्किलमना भूयात् भवानङ्ग हि ॥५४॥

किं च—

दैत्यैर्दुर्दान्तकृत्यै रणभुवि मथितांस्तैस्सुधाशान्मुधाशान्
स्ववसि विप्रवासे त्वरितमतिजुषो भेजुषोऽपारशोकम् ।
दृष्ट्वा त्राणासमर्थैः द्रुहिणहरमुखैः दानवारिं प्रपन्नैः
तल्लब्धोपाययोगादमृतविमथनं तावदारब्धमङ्ग ॥५५॥

उत्पाट्य क्ष्माधरेन्द्रं शिथिलनिजभुजाः शर्वमुख्याः प्रपन्नाः
भूयो वै लोकनाथं शरणमशरणाः श्रीसहायं सहायम् ।
तेनादिष्टेन कामं निरवधिकमहासत्त्वभाजा क्षणेना-
नन्तं नोत्पाटितं तं त्रिदशदनुभुवां[1] ते समूहाः समूहुः ॥५६॥

निर्मुक्तं भूरि भारोद्वहनजकदनोद्विग्नसंमग्नभग्न-
स्कन्धैरादित्यदैत्यप्रकरपरिबृढैः बृन्दशो मन्दराद्रिम् ।
मार्गे नैका[2]न्दलन्तं हरिरथ गरुडे लीलयाऽऽरोप्य चैनं
हस्तेनैकेन निन्ये जलधिमभिहतान् जीवयन् जीवलोकान् ॥५७॥

सर्वान् शर्वाज[3]मुख्यान् अमरदनुसुतान् संनिरीक्ष्यप्रयत्नात्
आनीतं मग्नमद्रिं जलनिधिजठरे मन्थरं मन्थराशान् ।
प्राप्तान् भूयस्समीपं शरणमशरणान् प्रेक्षमाणोऽम्बुजाक्षः
कूर्मो भूत्वा स दध्रेऽधिजलधितमहो भूरि कारुण्यराशिः ॥५८॥

त्रुट्यत्कोटीरकोटीस्फुटघटितमणीकोटिभिर्देवदैत्य-
स्तोमैः सोमाजमुख्यैः चिरपरिमथनध्वस्तहस्तप्रसारैः ।

---

१. °तनुभुवां क ।
२. मार्गेऽनेका° ख ग ।
३. स्वर्वासमु° ख ग ।

आर्तैः तोष्टूयमानो हरिरखिलतनुः भूरि कारुण्यसिन्धुः
निर्मथ्याम्भोधिपूरं सजवमथ सुधां साधयन्नैधयत्स्वान् ॥५९॥

पीयूषे दैत्यसंघैः बलिभिरपहृते भग्नकृत्यान् स्वभृत्यान्
आदित्यान् सोऽभ्युपेत्याभयमभिकलयन् दिव्ययोषित्स्वरूपः ।
दैत्यांस्तान् वञ्चयित्वा रुचिरमधुरविस्मेरहासावलोकैः
चक्री चक्रेण भिन्दन् स्थितमपि सुरवन्माययाऽपाययत् स्वान् ॥६०॥

पीयूषाभावरुष्टे रणकरणचणे दैत्यसंघे च संख्ये
विध्वस्ते चक्रधाम्ना सरसिरुहदृशा निष्प्रकम्पा निलिम्पाः ।
सर्वात्मानं विनाऽमुं मुनिभिरभिनुतं सर्वलोकैकनाथं
ब्रह्मेशेन्द्रादिकानां स्वयमिह भवितुं[1] कः पुमर्थस्समर्थः ॥६१॥

अपि च[2] भगवतो नारायणस्य मायामाहात्म्येन[3] स्मरशत्रोरपि हरस्य स्मरः शत्रुरभूत् । पश्य—

योषा वेषाभियोगं सरसिरुहदृशो द्रष्टुमभ्येत्य रुद्रः
स्फायल्लोलद्दुकूलौ द्रुतकनकमयस्तम्भसंभावनीयौ ।
चारू ऊरू विलोक्य स्मरशरमथितः स स्मरारिः पुरारिः
धावन् तत्सङ्गलुब्धो[4] दिशि विदिशि ततो मोहतो हा हतोऽभूत् ॥६२॥

अपि च—

अटन्नथ नभो गङ्गां स्मरारातिरपि स्वयम् ।
वहन्नपि नभोगङ्गां रेतो धर्तुमपि क्षमः ॥६३॥

सखे अन्यदपि किंचित् भवानीप्राणनाथप्राणत्राणनैपुण्यं भगवतः श्रृणु—

वृकासुराय कामितं प्रकाममम्बिकापति-
र्वरं ददत्पुरन्दराद्यमन्दभीतिदं ततः ।

---

१. भविता क ।
२. 'अपि च' नस्ति ख ग ।
३. °माहात्म्यात् न स्मर° ख ग ।
४. °लब्धो ख ग ।

परीक्षितुं समुद्यतात् परिभ्रमन्महाभयां
व्यथामधात् सुधाशनैः विधातृतोऽपि दुश्शमाम् ॥६४॥

तदनु[1]—

कैलासे निर्विलासे पुरपति[2]रभितः प्रस्फुटायां जटायां
तारेशे निष्प्रकाशे दिशि दिशि नितरां स्वस्स्रवन्त्यां स्रवन्त्याम् ।
निश्शीले नैजशूले भयभरवशतः संभ्रमायामुमायां
धावन् लोकाननेकान् शरणमुपगतः श्रीसखं तेन गुप्तः ॥६५॥

अपि च[3]—

यं यं त्रातुं वरं प्रादादाशुतोष उमापतिः ।
स सोऽनर्थमवापान्तमायुषोऽपि गतो बत ॥६६॥

तथा हि—

दुरात्मा दुराशावशात्माऽपराधे[4]
दधानो मुधाऽसौ सुधांश्वर्धमौलिम् ।
स साल्वः प्रसाद्य प्रपन्नो वरौघं
हतौजाभृतोऽभूत् स्वतोब्जाक्षशक्तेः ॥६७॥

पुरारेः प्रसादात् दुराधर्षवीर्यः
सुरारिर्वरिष्ठं[5] गरिष्ठं प्रपन्नः ।
दशास्यः प्रशास्य त्रिलोकोऽतिदृप्तो
हतायुर्बताभूत् परात्मापराधात् ॥६८॥

किं च[6]—

एकः काशीनृपाय स्तुतवत उपदिश्याभिचारं प्रयोगं
रुष्टेनैकेन तस्मात् प्रहित[7]मविषहं ज्वालया वै रथाङ्गम् ।

---

१. 'तदनु' नास्ति ख ग ।
२. पशुपति° ख ग ।
३. 'अपि च···गतो बत' इत्यन्तस्त्रुटितः ख ग ।
४. दुराशापरात्माऽपराधो ख ग ।
५. पुरुषं ख ग ।
६. 'किं च' नास्ति ख ग ।
७. प्रहत° ख ग ।

भस्मीकुर्वाणमृत्युर्जनपदसहितं तं नृपं वीक्ष्य भीतः
त्यक्त्वा काशीं च वध्वा सह वनमविशत् कस्तयोरुत्तमः स्यात् ॥६९॥

एकस्यांशश्च भक्तः परममुनिरथैकस्य भक्तं चरन्तं
साध्यद्वादश्युदारव्रतमवनिपतिं प्राप्य रुष्टो जिघांसुः ।
तस्मै कृत्यां प्रहिण्वन् तदनघतपसा दह्यमानोऽभिगम्या-
नेकान् लोकान् तमेवाशरणमुपगतः कस्तयोरुत्तमः स्यात् ॥७०॥

एकः स्वाङ्घ्रिसरोजभक्तमसुरं बाणाभिधं रक्षितुं
घोरैः क्रूरतरैः महास्त्रनिकरैरेकेन साकं स्वयम् ।
युद्ध्वा भग्ननिजास्त्रवर्यविततिर्गत्वा तमेवारिणं
स्तुत्वा लब्धमनोरथः समभवत् कः स्यात् तयोरुत्तमः ॥७१॥

किं बहुना—

एकस्याङ्घ्रिसरोजतश्च्युतसरिच्छ्रेष्ठोदकं निर्मलं
शुद्धं लोकमलौघघस्मरतमं ब्रह्मर्षिसंघैस्स्तुतम् ।
कोटीरे परमादरेण विधृतं देवैर्विरिञ्चादिभि-
स्त्वेको मूर्ध्नि दधार तापहतये कः स्यात् तयोरुत्तमः ॥७२॥

लीलामानुषरूपिणो भगवतश्चित्रं चरित्रं शुभं
को वा हन्त निकर्षकारणमुदाहर्तुं पुमान् शक्नुयात् ।
श्रीदामोद्वहनं पराजयवशात् शौरेस्तु वृन्दावने
किं चाप्यर्जुनदूत्यकं किमु भवेत् माहात्म्यविक्षोभकम् ॥७३॥

श्रीमद्भागवतं मुमुक्षुमहितं श्रीमन्महाभारतं
श्रीमद्विष्णुपुराणमद्भुततमं श्रीमच्च रामायणम् ।
यच्चारित्रपराण्यमूनि भुवनेष्वाबालवृद्धं जनैः
पठ्यन्तेऽभिमतार्थसाधनपरैः कस्तस्य तुल्यो भवेत् ॥७४॥

अमीषां तु प्रमाणानां श्रीसखैकान्तरङ्गता ।
उपक्रमोपसंहाराद्यानुगुण्यात् प्रतीयते ॥७५॥

एतेषु च प्रमाणेषु विषात् विद्रावणं हरेः ।
किं श्रूयते मूढचेता दूरतस्त्यज तद्भ्रमम् ॥७६॥

तामसानि पुराणानि विगीतानि मुमुक्षुभिः ।
नैवोपादेयतां नूनं प्राप्नुवन्तीति सस्मरुः ॥७७॥

पुनः भक्ति—प्रकर्षवशात्[1] हरिगुणानन्दलहरीं पठति—

रसाभ्यामन्योन्यप्रणयसरसाभ्यामनुकलं
वराभ्याम् आनम्र[2]प्रकटितवराभ्यां त्रिजगताम् ।
हिताभ्यामीशानद्रुहिणमहिताभ्यां मुनिजनैः
स्तुताभ्यामेकाभ्यामपि भवतु ताभ्यां नतिरसौ ॥७८॥

वहन्ती नैस्तुल्यं[3] हृदि परिवहन्ती जनिमलं
दहन्ती चानन्दान्तरमविषहन्ती सुमहिता ।
हरन्ती पापौघानथ परिहरन्तीयमभयं
स्फुरन्ती हे विष्णोऽनघ हरिगुणानन्दलहरी ॥७९॥

सहिष्णो हे विष्णो विनमदपराधस्य बहुशो
ग्रसिष्णो पापानां दनुजकुलजिष्णोऽनघगुण ।
त्वया व्याप्तं यस्मात् जगदिदमशेषं स्वयमभूत्
अतस्ते विष्णुत्वं प्रकटितम् अशेषैः[4] श्रुतिगणैः ॥८०॥

अमेयैराम्नायैरनितरपरैर्मृग्यमहिमन्
सदा जिष्णो विष्णो तव चरणसेवामिह विना ।
निराबाधोऽगाधो मम कलुषमेधोदयवतो
युता बाधा बाधो निगममकुटीनामपि कथम्[5] ॥८१॥

---

१. °प्रकर्षात् ख ग ।
२. आनन्द° ख ग ।
३. नैस्तुल्ये ख ग ।
४. अशेषं क ।
५. कथा ख ग ।

—३—

त्वमीशः त्वं ब्रह्मा त्वममरपतिश्च त्वमरुणः
त्वमग्निः त्वं वायुः त्वमसि वरुणः त्वं धनपतिः ।
मखस्त्वं मन्त्रस्त्वं मखफलमपि त्वं मखपतिः
त्वं ऋत्विक् त्वं कालः त्वमखिलमपि त्वं मुररिपो ॥८२॥

विशुद्धं विज्ञानं त्वयि सततबद्धं तव कृपा-
प्रवृद्धं[1] हे विष्णो श्रुतिशिखरसिद्धं दधति ये ।
नभो वायुर्वह्निस्सलिल-मचलो[2] ह्यन्मिषदिदं
जगत् सम्यक् जानन्त्यनघ भवदेकात्मकममी ॥८३॥

विधित्वं विष्णुत्वं परमिह शिवत्वं खलु वहन्
जगत्सर्वं विष्णो सृजसि परिपासि प्रहरसि ।
तदेतत्सुव्यक्तं कथितमनघाम्नायशिरसा
तथा पाराशर्यैर्वचननिचयैश्चापि विशदा ॥८४॥

विधातारं विष्णो कतिचिदभिगच्छन्ति शरणं
सुधाशानामीशं कतिचन महादेवमपरे ।
वृथा मोहस्त्वेषां तव गुणकथास्वादविरहात्
तथा माभूम त्वत्सुचरितसुधास्वादरसिकाः ॥८५॥

न काङ्क्षेऽन्यद्विष्णो तव शुभपदाम्भोजभजनात्
महद्भिः संप्रार्थ्यान्महितविभवान्मङ्गलतमात् ।
पुमान् धीमान् भीमां कमलभवभीमाङ्घ्रिभजने
रुचिं को वा कुर्यात् जनयति पुनर्गर्भवसतिम् ॥८६॥

दुरन्तं दुर्दान्तं भवमभिभवन्तं विनमता-
मनन्तं श्रीमन्तं शुभमुपवहन्तं त्रिजगताम् ।

---

१. प्रवद्धं खग ।  २. °मचलेत्युन्मि° क ।

महान्तं धीमन्तं मनसि विहरन्तं यतहृदां
विभान्तं श्रीकान्तं कमलनयनं तं भज मनः ॥८७॥

वेदान्तपादस्तवः

पुनरपि भक्तिप्रकर्षेण वेदान्तपादस्तवं पठति—

आनन्दपूर्णं पतिमिन्दिरायाः भक्तोत्तमर्णं भुवनाभिगुप्त्यै ।
स्वातोऽवतीर्णं दशधा[1] भजेयम् आदित्यवर्णं तमसः परस्तात् ॥८८॥

कृपातिशीतं हृदयं वहन्तं गुणैरुपेतं दनुजद्रुहन्तम् ।
श्रिया समेतं सततं विभान्तं वेदाहमेतं पुरुषं महान्तम् ॥८९॥

नृत्यन्तमेतं जगदुद्भवाद्यैरत्यन्तनित्योन्नतिमात्मतन्त्रम् ।
सत्यं भजेयं सततं रमेशं नित्यं विभुं सर्वगतं सुसूक्ष्मम् ॥९०॥

मुदा स्थवीयान् मुरजित् गरीयान् इन्धे[2] बलीयान् जगतां वरीयान् ।
सतोऽदवीयानसतो दवीयान् अणोरणीयान् महतो महीयान् ॥९१॥

गुहाशयं गूढतमं प्रशान्तं निरञ्जनं निर्मलमद्वितीयम् ।
श्रियः पतिं लोकपतिं भजेयं विश्वं पुराणं तमसः परस्तात् ॥९२॥

घनोपमः पङ्कजदृङ्नतानां घनोपतापापह एष इन्धे ।
इनोपमैः सूरिभि-रर्च्यमानो[3] मनोमयः प्राणशरीरनेता ॥९३॥

सदा विशुद्धो विजरो विशोकः सदालिभिर्भाति नुताङ्घ्रिपद्मः ।
मुदाश्रयः श्रीरमणः कृपाब्धिः हृदा मनीषा मनसाऽभिक्लृप्तः ॥९४॥

वेदान्तरङ्गेषु नयेषु दक्षा वेदान्तरातङ्कहरा रमेशम् ।
वेदान्तवेद्यं कवयो वदन्ति वेदान्तविज्ञानसुनिश्चितार्थाः ॥९५॥

---

१. दयया ख ग । ३. °रीक्ष्यमाणो ख ग ।
२. निजे ख ग ।

विचार्य तत्त्वेन सुनिश्चितस्त्रयीप्रचारभूभिर्हि पराशरादिभिः ।
अचापलासक्तिभिरिन्दिरापतिः न चास्य कश्चित् जनिता न चाधिपः ॥९६॥

क्व च श्रियः श्रीः क्व जडोऽथ लोकः क्व च प्रभावः परमस्य पुंसः ।
क्व च क्षयिष्णोः जगतोऽस्य भूमा न चक्षुषा पश्यति कश्चनैनम् ॥९७॥

## श्रीरङ्गनगरवर्णनम्

एवं भगवन्तम् अभिष्टुत्य प्रथमं भुवमेव अवलुलोकयिषुः[1] विमानं चालयित्वा अग्रतोऽवलोक्य सप्रश्रयम् अञ्जलिं बद्ध्वा—

पश्य श्रीरङ्गमङ्गप्रतिकल-विहिता[2]नङ्गसङ्गप्रभङ्गं
तुङ्गापाङ्गानुषङ्गाज्जलनिधिजनुषो भङ्गसंपत्तरङ्गम् ।
रङ्गी संगीतभङ्गीपटुतरललनासङ्गसङ्गी रथाङ्गी
संगीतोऽङ्गी स्मरोऽङ्गीकृतनतवचनो राजते यत्र विष्णुः ॥९८॥

स्फुटीभूताशेषश्रुतिततिनटीगीतचरिता
जटीन्द्राद्यैः सेव्या स्तुतिकृतिपटीयोभिरनिशम् ।
जरीजृम्भत्संपच्छ्रुतिसुखकरी गोपुरदरी
नरीनृत्यद्भूषा विलसदमरी रङ्गनगरी ॥९९॥

रङ्गं भवभङ्गं भज तुङ्गं तरुबृन्दैः
स्फीतं भुवि भातं नमदातङ्क-निहन्तृ[3] ।
श्रीमद्गतभीमत्सरधीमज्जनसेव्यं
सेवाधिकभावागतदेवावलिसान्द्रम् ॥१००॥

## श्रीवैष्णवयतिनिन्दनम्

*जयः*—सखे युक्तमेवोक्तम्; अथाप्यविचारितरमणीयचरिता जडजनप्रलोभचणवेषभाजो बैडालवृत्तिकाः केचन यतयोऽत्र वसन्तीति कम्पते मे हृदयम् ।

---

१. अवलोकिपुः *ख ग* । ३. °हरन्तम् *ख ग* ।
२. °वितता° *ख ग* ।

वैराग्यं भावयन्तो भृशमतिकपटाः शिष्यसंपत्तिकामाः
कन्था सन्धारयन्तो विरचितविविधोपोषणादिव्रताश्च ।
भूरि क्षीरं पिबन्तो निशि रहसि हितोपाहृतं शर्कराढ्यं
भुञ्जाना भक्ष्यजातं कतिचन यतयः संवलन्त्यत्र कष्टम् ॥१०१॥

किं च—

येषां दूरनिरीक्षणेऽपि महती संस्मर्यते निष्कृतिः
तेषां दोषपुषामसद्गुणजुषां देहात्मधीभेजुषाम् ।
विद्यां भावयतां[1] सदा समधिकां वात्स्यायनीं शिष्यसं-
भ्रान्त्यर्थं यतयो बलादुपदिशन्त्यध्यात्मशास्त्राण्यहो ॥१०२॥

शिष्याणामुपसंग्रहः किल यतेः पातित्यहेतुस्मृतः
शिष्यस्नेहधृतिश्च शिष्यसुतयोः नैवास्ति भेदो यतः ।
शिष्याणां गृह एव भैक्षचरणं मन्त्रोपदेशोऽञ्जसा
दोषायैतदिति स्मरन्ति तदिदं सर्वं त्वमी कुर्वते ॥१०३॥

श्रीशाराधनक्लृप्तयेऽपि च यतेः स्वीयेन हस्तेन वै
नैवार्हं तुलसीदलस्य हरणं त्वेवं[2] हि शास्त्रस्थितिः ।
कूटस्थैरननुष्ठितां च यतिभिस्त्वेते पुनर्निर्भयाः
शिष्याशाग्रहपीडिता विदधते तापान् व्यथाऽऽपादकान् ॥१०४॥

पारम्पर्यत आगतो निजकुलाचारो न हातव्य इ-
त्याहुः शास्त्रविदो यतश्च्युतिमतां पाषण्डिता स्मर्यते ।
एते कल्पितसंप्रदायपदवीभेदप्रकाशाशया
शिष्यत्वेन समागतान् विदधते भ्रष्टान् कुलाचारतः ॥१०५॥

अपि च—

वैराग्याभिनयेन सन्ततमधोदृष्टिप्रसारेण दु[3]-
ष्कन्थाया धरणेन भूरि कपटाचारेण मौनेन च ।

---

१. हापयतां *ख ग*।
२. दैवं *ख ग*।
३. च *ख ग*।

भिक्षापर्यटनश्रमाभिनयतः संमोहयन्तो जडान्
हन्तैते खलु शिष्यसंग्रहविधौ बद्धस्पृहा निःस्पृहाः ॥१०६॥

किं बहुना—

कष्टं कष्टमहो महान्[1] हतकलेरुन्मेष एष स्वयं
संन्यासाश्रममाश्रिताः कटिलसत्कन्था विरक्ता इव ।
भिक्षां सेवकदक्षिणामथ तदुद्वाहं ग्रहं शाटिकां
व्याजीकृत्य समार्जयन्ति बहुशो द्रव्याण्यमी निर्भयाः ॥१०७॥

किं च—सखे मोक्षाश्रमजुषामपि अमीषाम् अन्योन्यवैरादिकं पश्यतु भवान्—

अन्याय्यं किमितोऽस्ति यद्धतकलौ संन्यासिनोऽन्यादृशा-
सूया हन्त परस्परं विदधते स्वैरं हि वैरं त्वमी ।
अन्योन्यं मृतिचिन्तकाः किल मिथः शिष्यापहारोद्यता
भूयिष्ठासु सुदुर्वचासु च मिथो निन्दास्वमन्दाशयाः ॥१०८॥

श्रीवैष्णवयतिप्रशंसनम्

*विजयः*—सखे[2] अनादिकालसञ्चितदुष्कृत-कलुषी[3]कृतधिषणो भवान् । यतः परमभागवताग्रेसरान् अमून् यतिपतीनपि विनिन्दसि ।

स्नात्वा सह्यसुताजलेऽतिविमले धूत्वाऽखिलांहोगणं
जप्त्वाऽष्टाक्षरमन्त्ररत्नमनिशं नत्वा श्रियो वल्लभम् ।
कृत्वा तच्चरणार्चनं स्वयममी पीत्वा तदीयं पयः
ज्ञात्वा न्यायशिखां सुखं च दिवसान् नीत्वा वसन्त्यत्र ते ॥१०९॥

गृह्णन्तु वाऽर्थानपि हूणसेवकान्
अध्यात्मशास्त्राण्यपि पाठयन्तु वा ।

---

१. महोद्धत° *ख ग* ।
२. 'सखे' नास्ति *क* ।
३. °कलुषित° *ख ग* ।

अन्योन्यवैरादिकमाचरन्तु वा

श्रीरङ्गवासात् यतयो धुतांहसः ॥११०॥

आचार्यपुरुषनिन्दनप्रशंसने

अन्यतो विलोक्य—

आचार्यपुरुषा एते महावंशसमुद्भवाः ।

शिष्यैर्दत्तेन वित्तेन वित्तेशमवमन्वते ॥१११॥

*जयः*—सखे अतिक्रूरपापकर्मणोऽप्येतान्[1] अवलोकनकर्मीकरोषि । पश्य एषां कृत्यम्—

गत्वा नावा सुदूरं जलनिधिजठरे संस्थितं देशजातं

कृत्वा तत्रत्यशूद्रक्षितिपतिविततेरङ्कनं तत्प्रदत्तम् ।

लब्ध्वा द्रव्यं किलैते स्वयमथ यमिनां प्रागिहोदाहृतानां

दत्वा भिक्षां सुदृप्ता बत हतकलिसाम्राज्यमुज्जृम्भयन्ति ॥११२॥

सन्ध्या वन्ध्याप्रसूतिर्गगनकुसुममौपासनोपासना सा

नीचा शौचादिवार्ता क्व परमपुरुषाराधना साधनास्था ।

पाकस्त्वेषां श्वपाकप्रभृतिदुरितकृच्छिष्यतृप्त्यै विवाहो

रत्यै नुत्यै रसज्ञा तदिह हतकलेः कश्चिदुन्मेष एषः ॥११३॥

*विजयः*—सखे मैवं वादीः ।

अकृत्यशतमप्यमी विदधतु स्वयं रङ्गभू—

वसत्यपहतांहसः खलु भजन्ति शुद्धिं पराम् ।

असत्यनिरतोऽपि यः पठति रङ्गशब्दं सकृत्

स सत्यनिरतोऽञ्जसा भवति किं पुनस्तज्जुषाम् ॥११४॥

---

१. 'किमिति' इत्यधिकः *ख ग* ।

इत्युक्त्वा अन्यतोऽवलोक्य—

नवीनपथनिर्माणविलक्षणकुतूहलाः ।
विलक्षणा विभान्त्यस्मिन् आचार्याः पुरुषा[1] इव ॥११५॥

जयः—सखे किमेतानपि वचनकर्मी—करोषि[2] कापुषान् ।

पश्य—

त्रय्यन्तद्वयचिन्तनेन सुपरिश्रान्तैर्बुधैरञ्चितं
पारम्पर्यत आगतं गुरुकुलं निस्सीमभूमास्पदम् ।
त्यक्त्वाऽऽचार्यकपुंस्त्वसाधनकृते पित्रादिकान् दुष्कलेः
पौष्कल्यादनिशं श्ववृत्तिनिरतान् संश्रित्य धन्या इव ॥११६॥

विजयः— सखे[3] मैवं भाणीः—

दोषाः सन्तु सहस्रशोऽप्यतितरामेषां विशेषान् गुणान्
दोषापाकृतिदीक्षितान् शृणुतरां लब्धावधानः सखे ।
भक्तालाभकृशाभ्य एव भगवद्भक्तावलिभ्यो घृतो-
त्सिक्तान्नप्रतिपादनेन परमोद्युक्तास्त्वमी निर्मलाः ॥११७॥

किं च—

क्षेत्रारामगृहादिशून्यविदुषां वृत्तिं सतीं पुष्कलां
कारुण्यात् परिकल्पयन्ति नृपतेरावेद्य चैतान् स्वयम् ।
द्रव्यं भूरि हि दापयन्ति भगवत्कैङ्कर्यतुष्टा अमी
को निन्दां समुदीरितुं प्रभवति त्वेषु प्रशान्तात्मसु ॥११८॥

इत्युक्त्वा विमानम् अन्यतः किंचित् चालयित्वा अभिवीक्ष्य—

तेन्नाचार्यंवरा एते खिन्नाः कैङ्कर्यजश्रमात् ।
नुन्नाघनिचयाः शिष्यैः किं नालोक्या विमुक्तये ॥११९॥

---

१. आचार्यपुरुषा क ।
२. °कुरुषे क ।
३. 'सखे' नास्ति क ।
४. 'श्रम' नास्ति ख ग ।

*जयः*—सखे भ्रम[1]विधूतश्रुतिविततिप्रकर्षान् पुरुषानपि श्लाघसे। तथा हि—

न विश्वास[2]स्तेषां श्रुतिविहितसन्ध्यादिकलने
न वा स्वासक्तिः सा निगममकुटीनामधिगमे।
समाश्वासः किं तु द्रमिड़भणितौ नूतनकृतौ
स विश्वासाधीशो कथमवति दृप्तान् भृशमसून् ॥१२०॥

*विजयः*—सखे एतान् परमभागवताग्रेसरानपि किं विनिन्दसि। पश्यतु भवान्—

आचार्यप्रतिपत्तिरद्भुततमा वाचामभूमिस्त्वसा-
वाचान्तातिसुदुस्तरौघजलधिः प्राचाऽपि वाचा स्तुता।
जागर्त्येषु विमुक्तिहेतुरनघा जर्हति दोषानसौ
चर्कर्तीश्वरनिग्रहप्रशमनं वर्भति तत्तोषणम् ॥१२१॥

अपि च—

वेदान्ताचार्य-वर्यै[3]र्दुरितनिचयकृत्क्षत्रबन्धुर्विमुक्तः
त्वाचार्यानुग्रहेणानघचरितमहापुण्यकृत्पुण्डरीकः।
मुक्तश्चेत्यङ्ग्यकारिस्फुटमलमिह भोः कर्मभिस्सर्वकर्मा-
नुष्ठानाभाव एष प्रभवति विदुषां चोभयेषां समानः ॥१२२॥

किं च[4]—

विश्वामित्रमुखान् महर्षिनिवहान् विश्वाधिकख्यातिकान्
निःश्वासत्रसदिन्द्रमुख्यविबुधान् विश्वासतोऽभ्येत्य सः।
इष्ट्वाऽसौ तदनुज्ञया क्रतुशतं दृष्ट्वा हठात् स्वःपदं[5]
भ्रष्टो हन्त ततस्त्रिशङ्कुरभवत् दुष्टो गुरोर्निग्रहात् ॥१२३॥

---

१. 'भ्रम' नास्ति ख ग।
२. न चैवासक्ति ख ग।
३. °वर्यादृदु° ख ग।
४. 'किं च' नास्ति ख ग।
५. स्वं पदं क।

गुरुः परं ब्रह्म गुरुः परागतिः
गुरुर्विमुक्तेः गुरुरभ्युपायः ।
गुरुः शरण्यश्च गुरुः पराः कला
गुरुः समस्तं त्विति तत्त्वदर्शिनः ।।१२४।।

अपि च अनन्यजन[1]सामान्या खलु भगवद्भक्तिरमीषाम्—

विधुतसकलहेये वीतरागैरुपेये
विमलगुणनिकाये विस्फुरद्दिव्यकाये ।
जयति खलु मुकुन्दे निस्तुलानन्दकन्दे
कबलितभवगन्धो भावबन्धो ह्यमीषाम् ।।१२५।।

नित्यं श्रीरमणालये स्थितिजुषः कैङ्कर्यबद्धादराः
कैङ्कर्याचरणश्रमेण जनितस्वेदाम्बुमुक्ताफलाः ।
सेवार्थं समुपागतान् क्षितिपतीन् स्तुत्वा गृहीत्वा धनं
प्राकारादिकमारचय्य भगवत्प्रीत्यै-व[2] तत्कुर्वते ।।१२६।।

न सन्ध्यानुष्ठानं न च नियतमौपासनविधिः
न शौचाचारो वा न च परिचयो वेदनिचये ।
न वा ज्योतिष्टोमप्रमुखमखसङ्गाभिमुखता
हरौ भक्तिः मुक्तिं जनयति करि[3]क्ष्माभृत इव ।।१२७।।

विप्रात् द्विषद्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखात् श्वपचं वरिष्ठम् ।
इत्याह हि स्फुटतरं भगवान् शुको नः
को वा हरिप्रियजने कलयेत निन्दाम् ।।१२८।।

---

१. 'जन' नास्ति *ख ग*।
२. च *ख ग*।
३. गज° *ख ग*।

अपि च—

साक्षादप्रतिपादकाच्च निगमात् नूनं परब्रह्मणो
वेदान्तेऽतिशयो यथा ह्युपगतस्सिद्धान्तबद्धादरैः ।
उत्कर्षस्तदपेक्षया भगवती या द्रामिडी संहिता
साक्षात् श्रीशगुणादनन्यविषया तस्यास्तथा संमतः ॥१२९॥

प्रोक्ता द्रामिडसंहिता भगवता पीताखिलाम्भोधिना
स्फीतात्मानुभवेन नैजतपसा धूतांहसा रंहसा ।
कुम्भीसंभवनामकेन मुनिना सर्वार्थसंदर्शिना
को वा स्यादपशब्दतामिह महाभाष्यार्थवेत्ता वदेत् ॥१३०॥

शठमथनमुनीन्द्रो निस्तुलानन्दसान्द्रो
विनतकुमुदचन्द्रः श्रीशनुत्यामतन्द्रः ।
वकुलमुकुलभूषोऽचिख्यपत्सर्वलोका-
न्नियतमनुजिघृक्षुर्द्रामिडीं संहितां ताम् ॥१३१॥

श्रियः पत्युः कामं परिचरणविश्लेषभयतः
सहन्ते सन्ध्यातिक्रममपि महाभक्तिविवशाः ।
रमेशार्थं पापं कृतमपि हि धर्माय सुकृतं
परं पापायैव स्वयममुमनादृत्य विहितम् ॥१३२॥

सखे आश्चर्यतमा खलु अमीषां भागवतप्रतिपत्तिः—

दृष्ट्वा भागवतान् सान्द्रप्रकर्षं पुलकाङ्किताः ।
पतित्वा[1] दण्डवत् भूमौ पृच्छन्ति कुशलं त्वमी ॥१३३॥

श्रीमद्भागवतावगाहविमलं तीर्थं स्थितं सर्वतः
तीर्थानामपि तीर्थमद्भुततमं त्यक्त्वा किलैते बुधाः ।
गङ्गासेतुकवेरजादिषु न संमज्जन्ति नैजांहसां
भङ्गार्थं तदहो हरिप्रियजने भक्तिस्त्वमीषां दृढा ॥१३४॥

---

१. पतन्ति ख ग ।

अस्माषुः मुनयोऽन्नदानभगवद्भक्त्यन्यकर्मव्रजं
काले दुष्कृतिपुष्कलीकृतमति प्रायो ह्यपायोन्मुखम् ।
भक्तिर्या च गुरौ हरौ त्रसदरौ भक्तिस्सकाष्ठा च या
ते द्वे नित्यतया श्रुते विलसतः तेनार्यगोष्ठ्यां भुवि ॥१३५॥

## चन्द्रपुष्करिणीवर्णनम्

इत्युक्त्वा अन्यतः विलोक्य[1] सभक्तिप्रकर्षम् अञ्जलिं बद्ध्वा—

शरणीकरणीयायै रमणीयपदैषिभिः ।
तस्यै चन्द्रसरोजिन्यै तनुमोऽथ नमो वयम् ॥१३६॥

या खलु दुरुपशमदुरितभरहरणनिपुणनिजसलिलसमवगाहकुतुकसमुपनत[2]नरपरिबृढघटाविकटमकुटतटघटितमणिगणरुचिपरिषदचिररुचिविलसिततट-युगसंरूढ[3]-निबिडविटपिनिवहनवजलधरपटलमतिचटुलसंभ्रमभरभरितमदनकदन-विवशशिखिमिथुननिकरसमभ्यस्यमानरतिकलाविलोकसमयसमुदयदनवधिकमदस-मुदयकुसुमनिचयापचयकुतुकसमुपनतसुररमणीगणकुचकलशयुगलसमुद्धतिविशीर्णत-दीयमुक्ताहारनिकुरम्बकरम्बितपरिसरतया चिरकालतपश्चर्यापरायणं निजाधि-नाथम् उपसेवितुम् आगताः तारागणा इति शङ्कामङ्कुरयन्ती असमशरशरमथन-जनितकदनविवशनिजसलिलविहरदमरवरतरुणीगणपरिहसितकुमुदसुमानुपमरुचि-भरभरितवदनकमल-[4] कमलकुलमिथोभेदकलनविकलव्याकुलतरतदाहरणागतकल-शजलधिदुहितृरमणचरणनलिनपरिचरणकरणनिपुणजननिवहा परिसरजटिलमृदुल-सरलवकुलमुकुलकुलपरिमलमिलदनिलतरलदलितनलिनमुकुलकुवलयगलदमितम-धुरमधुरसधाराद्विगुणीकृतपयःपूरा अमन्दतरभक्तिकन्दलितनिजान्तरङ्गमुनिबृन्द-सन्ततवन्दितमुकुन्दचरणारविन्दवन्दनं विना शुचितां कर्तुमनुचितमिति स्नानार्थमु-पगतस्य जगदघौघनिवारणाभिजाततया विश्वविख्यातेयं पुष्करिणी नाभिजात इति सर्वजगत्प्रसिद्धाय मह्यं कथं प्रसेदुषी स्यादिति निगममय्या स्तुत्या तावदेनां प्रसादया-

---

१. अवलोक्य ख ग।
२. °गत° ख ग।
३. संरुद्ध ख ग।
४. 'कमल' नास्ति ख ग।

मीत्य[1]ध्यवसितस्य भगवतः पद्मयोनेः निगमनिचयमुखरनिखिलनिजमुखवैखरीम् अनुकुर्वतीनां निजतटसमुपगतनित्यनैमित्तिककर्मानुष्ठानश्रद्धान्वितविहितबद्धादर-श्रुतिनिषिद्धाप्रवृत्तविविधसिद्धान्तनिवहसिद्धार्थनिपुणबुद्धादिमतसिद्धान्तविमुखशु-द्धात्ममहितभगवदनुविद्धान्तरङ्गभूसुरकुलसमारब्धब्रह्मयज्ञसमयसमधिगतमन्त्रब्राह्म-ण-घोषणारीतिमनुसरन्तीनां[2] तटविटपिकुटीरसंसारिणीनां शुकसारिकाणां पुञ्जेन मञ्जुलपरिसरा मदनकदन-वदन[3]वधिमदभरविवशहंसमिथुनविधूयमानपक्षपुटरु-चिनिकुरुम्बकरम्बितपुण्डरीकषण्डद्युतिमण्डलमण्डितसलिलतया अनवरतपितृवनव-सतिजनितमप्रायत्यं परिहृत्यैव परित्रातप्रपन्नजनयूथनाथस्य[4]अखिलहेयप्रत्यनीक-कल्याणगुणगणसनाथस्य सर्वलोकनाथस्य मम नाथस्य रङ्गनाथस्य चरणारविन्द-सन्दर्शनं कर्तव्यमित्यमुष्याः पयसि कृतमज्जनस्य भगवतो गङ्गाधरस्य जटाकु-टीरात् निर्गता गङ्गापूरा इति भ्रान्तिमुज्जृम्भयन्ती रम्भास्तम्भसंभावनीयोरु-मण्डितरम्भाप्रमुखनितम्बिनीसंभोगसंभ्रान्तिसम्भावितम् अनेकविधम् अशुचिभावम् आलोच्य भगवन्मन्दिरप्रवेशो नोचित इति चन्द्रपुष्करिणीस्पर्शेन आत्मानं निर्मली-कुर्याम् इति श्रद्धया इव[5] समुपागतं सहस्राक्षम् अनुगतानां विद्याधरगन्धर्वसुन्दरीणां करकलितवीणावाणीनां डम्बरं विडम्बयन्तीभिः तटनिकटसहकारानोकहनिवह-पल्लवतल्लजपरिचर्वणगर्वितमदकलकोकिलयुवतिविततितन्तन्यमानमधुरतरकूजि-तसन्ततिभिः मुखरितदशदिशावकाशासज्जनमनश्शैलीव भ्रमरहिता महावराहवत् कुमुदावहा बाणयुद्धसन्नद्धशौरिपराक्रमवत् भवविभवनिरासनिपुणा सत्त्वोत्तर-नराधिपवत्सत्कीर्तिशालिनी क्षत्रियकरवत्सत्तरवारिजातमण्डिता वरीवृत्यते[6]।

*जयः*—किमेषा दोषाकरपुष्करिणी विशेषाभिज्ञस्यापि तव स्तुतिपदम्।

पश्य—

भृशमिह मधुहन्तृस्वामिका हन्त दीव्य-
त्यधिकमधुसमृद्धिं पुष्करिण्युद्वहन्ती।

---

१. प्रसादयितुमित्य° *ख ग*।
२. °घोषरीतिमनुकुर्वन्तीनां *ख ग*।
३. 'वदन' नास्ति *ख ग*।
४. °यूथस्य *ख ग*।
५. 'इव' नास्ति *क*।
६. परिवर्तते *ख ग*।

अपि च मधुपसङ्घैः संवृतैषा जडात्मा
स्वयमपि जडजातैः नित्यसंसर्गिणी च ॥१३७॥

विजयः—श्लेष—भङ्गायतानां[1] दोषाणां नैवोत्तरार्हता ।

परमहितसमेताप्युल्लसत्पद्ममाला
निजविमलजलान्तर्मज्जनानां जनानाम् ।
विनतविविधभूता नाम यो पापहासा
विधुततपनबाधा चित्रमेषा विभाति ॥१३८॥

पुनः सभक्तिप्रकर्षम् अञ्जलिं बद्ध्वा[2]—

स्नानं प्राहुरशीतिकृच्छ्रफलदं यस्यां हि यत्सन्निधौ
दानं कोटिगुणं क्षणार्धवसतिः साक्षाद्विमोक्षावहा ।
यद्दृष्टिं च महांहसां प्रशमनीं सिद्धौषधं रोगिणां
यत्तोयं सततं नमस्तनुमहे तस्यै सरस्यै वयम् ॥१३९॥

अपि च—

यत्तीरे चिरतप्यमानतपसां सद्योगिनां योगिनां
त्रय्यन्तार्थविभावनाप्रकलनास्तम्भायितस्वात्मनाम् ।
धूलीधूसरितातिदुर्भरजटावाटीकुटीरावली-
संरूढद्रुमषण्ढकोटरतटी संसारिणः पक्षिणः ॥१४०॥

यस्यास्तीरजुषां तपोऽनलकणैरश्रान्तमभ्रान्तर-
भ्रान्ता हन्त शकुन्तका उपगतास्तान्तादिगन्[3]तानहो ।
सुत्रामप्रमुखाः सुराः खलु निजासुत्राण-कामा[4] विधिं
सत्रासाः शरणं गताश्च सरसींसत्रायिणीं[5] तां भजे ॥१४१॥

---

१. °भङ्ग्या कथितानां *ख ग* ।
२. 'अञ्जलिं बद्ध्वा' नास्ति *क* ।
३. तान्तखग° *ख ग* ।
४. °कर्मा *ख ग* ।
५. सत्रायणीं *ख ग* ।

## श्रीरङ्गनाथवर्णनम्

इति स्तुत्वा विमानम् अन्यतः किंचित् चालयित्वा समुद्वीक्ष्य साञ्जलिबन्धम्—

रङ्गपतिमङ्गवदनङ्गशततुल्यं
तुङ्गभुजसङ्गतरथाङ्गमसुरारिम् ।
अङ्गमृदुलाङ्गमविभङ्गबलमीडे
सङ्गमरिभङ्गमिह मङ्गलदवीक्षम् ॥१४२॥

गाङ्गसुतरङ्गकृतलिङ्गपदमुञ्चा-
पाङ्ग-युत[1]मङ्गदसुसङ्गतमुपासे ।
कुन्दसुमबृन्दसममन्दहसदीव्य-
द्दन्तममुमन्तरहितं तमखिलेशम् ॥१४३॥

श्रीकमनमाकलय मूकहृदयाद्या-
नेकनतशोकततिकोककुलचन्द्रम् ।
नाकमपि नाकलय भीकलिलमेवा-
स्तोकमुदमाकरमभीकमभिवाञ्छा ॥१४४॥

*जयः*—सखे सर्वलोकविलक्षणशीलं महाभुजगभोगैकसङ्गिनं रङ्गिणमपि किम् अभिनन्दसि ? पश्य—

यस्यासीत् श्वशुरो जलध्यभिधया ख्यातो जडध्युद्भवा
भार्यासौ जडजातयुक् च चपलाभिख्या स्वयं चञ्चला ।
स्यालश्चापि जडः कलङ्कसहितो दोषाकरो दृष्टिर-
प्याप्ता सत्प्रतिकूलता परहिरण्याहर्तृ नेड्यः[2] स किम् ॥१४५॥

पयोधरोत्तुङ्गरुचिः समिन्धे
वहंश्च नानाविधभावजातम् ।

---

१. घृत° ख ग ।    २. तेभ्यः क ।

रङ्गी च सङ्गी भुजगैकभोगे
रामार्पितात्मा कनकानुषङ्गी ॥१४६॥

श्यामाङ्गनानायक एष रङ्गी
सदोरुगायः कुमुदावहश्च।
स सर्वकामः किल सर्वगन्धो
विभात्यहो सर्वरसो रसात्मा ॥१४७॥

*विजयः*—शब्दचातुर्यापादितो दोषो नोत्तरयितव्य इति।

रङ्गाधीशमुपास्महे शुभगुणैः शृङ्गारवन्तं त्रयी
शृङ्गाधीतनिजानुभावमनिशं गङ्गाधराद्यैर्नुतम्।
गङ्गासक्तपदाम्बुजं कृततमोभङ्गात्मसन्दर्शनं
तुङ्गापाङ्गमपत्यवित्तललनासङ्गान्वितानञ्चितम् ॥१४८॥

पायादस्तसमस्तहेयगुणको मायाविनामग्रणीः
छायानाथविलोचनो रविशतस्फायाधिकात्मद्युतिः।
मायामोहितपद्मसंभवमुखो मायानिवासः सुधीः
गेयात्यद्भुतरङ्गभूमिरसिकः कायाधवाद्यैः स्तुतः ॥१४९॥

क्षीराम्भोनिधिनन्दिनीसहचरः ताराधिनाथाननो
माराहंकृति-हारि[1]रूपमहितो धाराधराभ स्वयम्।
स्वाराजादिसमीडिताङ्घ्रिकमलो धीरात्मनां योगिनां
आराध्यः शुभमातनोतु स महोदराशयो रङ्गराट् ॥१५०॥

सुजननवसुरङ्गः साधु भास्वद्रथाङ्गः
स परमहिमभङ्गः प्रास्तदोषानुषङ्गः।
द्विजपरिबृढवन्द्यः पद्मिनीहर्षहेतुः
नियतमजलधिष्टो भाति रङ्गेन्दुरम्यः[2] ॥१५१॥

---

१. °हार रूप° ख ग।   २. रन्यः क।

अत्यन्तप्रतिनन्द्यरङ्गनृपते मय्यन्तरा मा कुरु
त्वय्यन्तःकरणित्व नान्य इति हि अत्यन्तसिद्धान्तिनः ।
अज्ञानी कथमेति तत्त्वम[1]नघं विज्ञानमूलं भवान्
विज्ञातुर्हि[2] मदात्मभाव इति चेत् प्रज्ञाऽखिला कस्य वा ॥१५१॥

त्वत्पादाब्जपरागमेव कलये रङ्गेशयं संश्रितो
जन्तुर्दन्तुरधीः समन्तुरपि वा सर्वज्ञतां गच्छति ।
त्वन्नाभीनलिनोत्थपूरुषमुपाश्रित्य स्वयं पण्डितोऽ-
प्यन्यो हन्त भवत्यतीव विषय[3]व्यासक्तचित्तश्च सः ॥१५२॥

## श्रीरङ्गनायिकावर्णनम्

इति संस्तुत्य अन्यतोऽवलोक्य सभक्त्युन्मेषम्—

अङ्गना रङ्गनाथस्य तुङ्गनासा-मणीयुता[4] ।
रङ्गनानाङ्गना गीता भङ्गनामा विराजते ॥१५३॥

*जयः*—सखे किमेषाऽपि कमला चपलाभिख्यया विराजिता विमलात्मनाऽपि भवता स्तूयते ।

ननु खलु कमलैषा कोपयुक्ता किमीड्या
मधुपरहृदयैकानन्दनोद्युक्तदृष्टिः ।
अविहितबहुभोगाधःकृता हीनभोगा
समधिकगुरुदारासक्तसौहार्दयुक्ता ॥१५४॥

किं च—

न दीनानुरक्ता किमीड्या रमेयं
विधूतान्तरङ्गा विनम्रेभनाथे ।

---

१. न त्वम° *ख ग* ।
२. विज्ञातुं हि *ख ग* ।
३. विषये *ख ग* ।
४. °मणीयता *क* ।

घनाशाघनाशाह्वयाहो निकामं
हिरण्यस्य हर्तुः प्रियेति प्रसिद्धा ॥१५५॥

*विजयः*—शब्दश्लेषापादितो दोषो नोत्तरार्ह इत्यसकृदब्रुवम् ।

विधुतविनतदोषा विस्फुरद्धेमभूषा
विमलमधुरभाषा वीतरागैकदोषा ।
विधिकृतनुतिघोषा विश्वपापौघमोषा
विलसति परमेषा विष्णुशुद्धान्तयोषा ॥१५६॥

विषयभवदुदन्या श्रान्तसंभ्रान्त[1]-जन्या
कुलनतजनदैन्याऽपोहदृग्विश्वमान्या ।
जयति परमवन्या कल्पभूतातिधन्या
किल भगवदनन्या दुग्धपाथोधिकन्या ॥१५७॥

महितगुणसमाजा मानिता देवराजा
मधुमदहरनैजालापसन्तोषिताजा ।
फणिपतिवरतल्पा प्राणिरक्षैकजल्पा
वितरणजितकल्पा भात्यसौ हेमकल्पा ॥१५८॥

खगपरिवृढयाना खेचरैः स्तूयमाना
भविनमभिपुनाना भक्तदोषान् धुनाना ।
शमधनकृतमाना शार्ङ्गिणि श्रद्दधाना
जयति विनतनानाभीष्टमेषा दुहाना ॥१५९॥

दनुसुतकुलभीमा दानवारौ सकामा
ललितविषयकामा लभ्यनैजप्रणामा ।
सरसिजभवसोमा सेव्यमानाभिरामा
विलसति ननु भूमाविन्दिरामेयभूमा ॥१६०॥

---

१. °संभ्रान्त° ख ग ।

मनोरमामाश्रय मे सवित्री
मनोरमामर्दयितुं दुरन्तम् ।
मनोरमामादरतस्त्वमुष्या
मनोरमारास्मरतः समृद्धिः ॥१६१॥

इत्यभिष्टुत्य किंचिदन्यतो विमानं निनीय अवलोक्य साञ्जलिबन्धम्—

वैनतेयवर्णनम्

विनतानन्दनः सोऽयं विनतानन्दनः सदा ।
भवतापहरो भक्त्या भवता परमीड्यताम् ॥१६२॥

यः खलु निखिलसुरासुरकोटीकोटीरकोटिखचितमणिगणकिरणनिकरनीराजितनलिन-चरणः[1], विहारसमयसंभ्रान्तनिखिलनिगममयनिजसंहननसमवलोकनसमयसमुद्भवदमितभयभरबंभ्रम्यमाणमहोरगनिवहस्फुटितफणामणिपटल निरर्गल[2]-निस्सृतमरीचिवीचिमालाकरम्बितदशदिशावकाशः, बलदमनमुखनिखिलसुरगणकदनकुतुकसमुद्यतसमरमुखविख्यातमहाबलपराक्रममहार्णवकालदण्डप्रतिममहा-शस्त्र[3]-शौण्डप्रचण्डकोपाखण्डधरणीमण्डलकण्टकायमानाशेषदानवप्रकाण्डद्रुमषण्ड-खण्डनसोत्सुकसमारूढवैकुण्ठपीठीकृतनिजांसकः, देवदानवगन्धर्वयक्षराक्षसकिन्नर-महोरगादिजगद्दुर्मोचदुष्करतरतपःप्रभावलब्धदुर्विज्ञेयतममहामायावैशारद्यविलसदिन्द्रजित्प्रहितकपटमानुषदाशरथिनागबन्धनिर्धूननकुतूहलसमागमसमयससंभ्रम-समुज्जृम्भमाणपक्षपुटविक्षेपसमुद्भूतमहावातव्रातनिर्धूतमहोदधिगर्भनिर्बाधनिर्यात-निर्वेलप्रसरमहोर्मिसंघसंघट्टनसंस्फुटितप्रासादगोपुरप्राकारनिरीक्षणसमुद्भवदमित-भयभरबंभ्रम्यमाणदशप्रमुखरक्षोगणपलायनकर्मनिर्मथितहृदयतदन्तःपुरनितम्बिनी-कदम्बकृतपरिदेवननिनदश्रवणमुदितमैथिलीहृदयकमलः, कर्ता[4] समस्तशास्त्राणां, स्मर्ता सकलधर्माणां, हर्तानिखिल[5]वैरवरूथिनीनां, संहर्ता सर्वक्षुद्रजन्तूनां[6], भर्ता

१. '°चरणः' नास्ति ख ग ।
२. °निर्गल° ख ग ।
३. °महास्त्र° ख ग ।
४. 'कर्ता' नास्ति ख ग ।
५. '°निखिल'° नास्ति क ।
६. जनानां ख ग ।

साधुजनानां, आदेष्टा अखिलसुराणाम्, उपदेष्टा सर्वनैगम-विज्ञानानाम्[1], निर्देष्टा साध्वसाधुविभागानाम्, भीषयिता पिशाचकुलानाम् पेषयिता निखिलजगदज्ञान-तमसाम्, शोषयिता संश्रितजनसंसारसागरौघानाम्, दूषयिता परमपुरुषेतरपार-म्यवादानाम्, घोषयिता भगवदप्रमेयप्रभावानाम्, भूषयिता भगवदेकान्तिजनानां, कर्ण इव सततप्राप्तदानवारिसङ्गः, यज्ञभूविशेष[2]-इव वेदमयः, सिंह इव प्रस्फुरद्द्वि-पध्वंसनधुरीणः, गिरिजावत् रुद्राङ्गसङ्गहर्षितात्मा, धार्मिकनृपतिरिव सुकीर्ति-शाली, तारगण इव विष्णुपदसंश्लेषशाली, काकुत्स्थ इव विनतानन्दनः, देवकी-नन्दन[3] इव सत्यानुरक्तमनाः, विहङ्गम[4]कुलानां ककुद्मान् गरुत्मान् चकास्ति ।

*जयः*—सखे अहिकुल[5]वित्रासकम् अनभिनन्द्यचरितम् एनमप्यभिनन्दसि—

यस्याहारतया महाविषधराः प्रादुर्बभूवुः स्वयं
हाराश्चापि त एव किं च महिषी रुद्राह्वया शोभते ।
यन्माता विनताह्वया च विबुधाहारस्य भर्ता[6] च यः
कामं सन्ततपक्षपातनिरतो हीनारिरीड्यः स किम् ॥१६३॥

*विजयः*—सखे शब्दचमत्कारचोदितो दोषो नोत्तरयितव्यः, यदन्यदापादितं तद्भूषणमेव दूषणतया[7] अवधूतवान् भवान् ।

यद्गन्धाघ्राणमात्रात् खलु गलदसवो निर्जरास्सर्षिसंघाः
यक्षा रक्षांसि सिद्धा अपि दनुतनयाश्चारणा वारणाश्च ।
लीलामात्रेण तादृक् विषधरनिकरं भक्षयन् पक्षिमल्लो
रक्षन् पक्षाभिविक्षेपणचलितगिरिर्नम्रवर्गं विभाति ॥१६४॥

---

१. °विश्राणानां ख ग ।
२. °विदेश ख ग ।
३. °सूनुः ख ग ।
४. विहगकु° ख ग ।
५. अहिनकुल° क ।
६. हर्ता ख ग ।
७. विधूतवान् क ।

पुनः सभक्तिप्रकर्षम्—

पीयूषाहृत्यमर्षाकुलवलदमनक्षिप्तकालानलाति-
ज्वालामालाढ्यवज्र[1]क्षतकिणविलसन्मेरुसंकाशमूर्तिः ।
भूत्यै दैत्येन्द्रदर्पद्रढिमविघटनः पक्षिराजः स भूयात्
आम्नायात्मानपायानवधिकबलवान् धूतहेयानुषङ्गः ॥१६५॥

दैत्यव्रातप्रभीतत्रिदशपरिवृतायातसुत्राममुख्य-
स्फायत्कोटीरकोटिस्फुटघटितमणीराजिनीराजिताङ्घ्रिः ।
भिन्द्यात् सन्ध्याभ्ररोचिः प्रचयनिजमहापक्षविक्षेपजृम्भ-
ज्झंझावाताभिघातक्षुभितजलनिधिर्मद्विपक्षान् सपक्षी ॥१६६॥

छिन्धि त्वं मद्विपक्षान् कलय शममितं भिन्धि भीतिं विषेभ्यः
सन्धित्सां[2] साधुभिर्मे जनय खगपते त्वं धियामेक-सूतिः[3] ।
क्षुद्रान् विद्रावयस्व प्रणिहितमनसां त्वत्पदाम्भोजयुग्मे
भद्राणि द्राग्विधत्स्व त्रुटितकटुरटद्वैरिकूटाभिमानः ॥१६७॥

भित्वा पक्षाभिघातैः जलनिधिसलिलं भ्रामयित्वा झषौघान्
गत्वा पातालकं विषधरनिकरान्[4] भक्षयित्वा सलीलम् ।
स्थित्वा पद्भ्यां गृहीत्वाऽन्यदपि जलधिसंश्लेषतः प्रागतोर्ध्वं[5]
प्लुत्वाऽऽकाशे नटित्वा विलसति खगराट् यस्स मां पातु नित्यम् ॥१६८॥

यद्वेगोद्भूतशब्दं प्रलयपवनवज्जृम्भमाणं सुदूरे
श्रुत्वा लोकः किमेतत्त्विति विविदिषया यावदुन्मीलितेच्छुः ।
तावच्छ्रुत्वा तमन्ते सपदि खलु ततोऽत्यन्तदूरे च देशे[6]
संभ्रान्तः स्वान्त[7] आसीत् स शकुनिरिह नः त्रायतामायताक्षः ॥१६९॥

---

१. °क्षति ख ग ।
२. सन्धि तां ख ग ।
३. °सूक्तिः ख ग ।
४. °निकटान् ख ग ।
५. प्रागतस्त्वं ख ग ।
६. देशः ख ग ।
७. ध्वान्त ख ग ।

स्वाच्छन्द्यात् धावमाने विहरणकुतुके मेरुतुल्ये च यस्मिन्
वेगाकृष्टत्रिकूटक्षितिरुहनिकरे साध्वसौ साध्वसार्तः ।
हंसोऽप्यंसाधिरूढं विधुय विधुमपि[1] लीनोक्तिदीनः
निर्धूयाहो वृषोऽपि त्रिनयनमसकौ पक्षिराट् रक्षतात् नः ॥१७०॥

लोकानाकुलयन् महाब्धिमथनोद्भूतं प्रभूतं विषं
पातुं[2] त्रातुमना जगत् पशुपतिः यःस्कन्धसंबन्धिनम् ।
ध्यात्वाऽनन्तमनन्तवैभवनिधिं श्रीवल्लभं दुर्लभं
सामान्यैर्धुतसाध्वसः तदपिबत् तार्क्ष्याय तस्मै नमः ॥१७१॥

त्रयस्त्रिंशत्कोटित्रिदशनिकरत्राणनिपुण-
स्त्रयीमूर्तिः तार्क्ष्यः त्रिनयननुतो मुक्तिफलदः ।
त्रिवर्गस्थैः सेव्यः त्रिगुणगुणभित्त्र्यक्षरमयः
त्रिकालज्ञः त्र्यघ्र्यश्चलरतनुतः पातु सततम् ॥१७२॥

पुनः सभक्तिप्रकर्षम्—

सर्पकुलदर्पहरसर्पणसलज्जाहर्पतिकगीर्पतिनुतार्पय कटाक्षम् ।
पापमभितापकरमापदमपि त्वं श्रीपतिरथापनुद भूप विहगानाम् ॥१७३॥

काममभिरामतनुभूम[3]-भिरुदस्यन् काममरिभीमनिजनामगरिमा त्वम् ।
वामशितधामशतयामयुतविद्या रामनत[4]कामदसराम जय तार्क्ष्य ॥१७४॥

पक्षिवर रक्षित नताक्षि सरसीजं प्रक्षिपसुशिक्षितिमदक्षितिप मह्यम् ।
पक्षधुतिविक्षपिततक्षकमुखासत्यक्षहृनिदक्ष परिरक्ष च विपक्षात् ॥१७५॥

आयुष्मन्तं गरुत्मन्तं[5] ककुद्मन्तं च पक्षिणाम् ।
आयुष्मन्तं प्रकुर्वन्तं नमस्यन्तं सदा भज ॥१७६॥

---

१. लीनोस्ति दीनः *ख ग* ।
२. पाकं *ख ग* ।
३. °रामनुतभूम° ।
४. रामनुत *ख ग* ।
५. विपक्षन्तं *ख ग* ।

इति स्तुत्वा अन्यतो विमानं चालयित्वा अग्रतो विलोक्य[1] सानन्दम् अञ्जलिं बद्ध्वा—

## दशावतारवर्णनम्

सेवायातसुरेन्द्रमुख्यमकुटी[2]-प्रत्युप्तगारुत्मत-
ज्योत्स्नामण्डलशाड्वलभ्रमसमायातैणशावाकुलम् ।
ब्रह्मध्यानपरायणैर्मुनिजनैरासेव्यमानं सदा[3]
पश्येदं भगवद्दशावतरणक्षेत्रं विमुक्तिप्रदम् ॥१७७॥

किं च—

शीतोद्भूतसुवातपातसनता[4]-धूतप्रभूतद्रुम-
व्रातस्फीतमरन्दजातनियताहूतालिगीताञ्चितम् ।
स्वेच्छेद्गच्छचुदच्छ[5]कच्छपपरिच्छेदोच्चलत्पङ्कज-
व्रातोद्भासिकवेरजाजलकणक्लिन्नं भजेदं स्थलम् ॥१७८॥

*जयः*—सखे भगवतः मत्स्याद्यात्मना[6] अवताराणामेव वः स्तुत्यनर्हत्वात् कथम् अस्य तत्संबन्धेन प्रशंसनीयता ? पश्य तावत्—

अस्यानुत्तमयोनिसंश्रयणतो जन्मानि पद्मापतेः
न स्तुत्या उचितानि तानि भविता निर्धूतये भोः कथम् ।
स्तूयन्ते भवतापि तत्रभवता शास्त्रोज्ज्वलद्धीमता
सेव्यः किं जनिमान् स्वयं भृशतरं जन्म प्रशान्त्यर्थिभिः ॥१७९॥

*विजयः*—सखे मैवं वादीः । पश्य तावत् भगवतो माहात्म्यम्—

यत्पादाब्ज[7]रजःकणाभिकलनात् निष्कल्मषा स्त्रीशिला
यद्धूर्तायितमामनन्ति हि महापापौघनिस्तारकम् ।

---

१. अवलोक्य *ख ग* ।
२. मकुट° *ख ग* ।
३. पदं *ख* ।
४. °सताता° *ख ग* ।
५. °गच्छदुधिश्च क° *ख ग* ।
६. अवतरणमेव *ख ग* ।
७. °रणःकणा° *क* ।

यत्पादाम्बुजसेवया सकृदसौ नीचोऽपि जन्तुः स्वयं
पुण्यालोक इतीह तादृशजनिर्न स्यात् किमस्योत्तमा ॥१८०॥

कर्मौपाधिकमेव जन्म मुनिभिः दुःखास्पदं स्मर्यते
स्वेच्छाधीनजगज्जनेः भगवतो[1] लीलारसव्यक्तये ।
जन्मान्यङ्ग विभावितानि मुनिभिः गीतानि दिव्यान्यहो
किं न स्युः भुविनां भवापनयने सामर्थ्य-[2]भाञ्जि ध्रुवम् ॥१८१॥

अपि च भक्तिप्रकर्षेण तत्तदवतारविशिष्टवेषेण भगवन्तं प्रार्थयते—

निर्मग्नमन्तरुदधेः निखिलागमौघम्
उद्धृत्य पद्मनिलयानिलयायितोराः ।
कार्यावबोधरहिताय चतुर्मुखाय
योऽदात् स मामवतु मत्स्यवपू मेशः ॥१८२॥

कण्डूयनेन गिरिणा गुरुणा सुखेन[3]
निद्राजुषः कमठरूपधरस्य विष्णोः ।
निःश्वासवातलहरी विवरीवरीति
विज्ञानरीतिमसतः प्रजरीहरीति ॥१८३॥

घोणारवेण महता दहता महांह-
स्तोमं पवित्रितजगत्त्रितयो वराहः ।
मुस्तामिव क्षितिमुदस्तसमस्तहेयो
यस्तामुदक्षिपदसौ मम भूतिदः स्यात् ॥१८४॥

सेव्यात् श्रियःपतिरुपेत्य वपुर्विचित्रं
मायेदमित्यरिषु संभ्रममावहद्यः ।

---

१. लीलाशयाव्यक्तये ख ग । ३. सखेन ख ग ।
२. °भाजि ख ग ।

प्रह्लादरक्षणमहाव्रतपूर्तिकामो
नूनं स्वयं वितनुते स्म हिरण्यदानम् ॥१८५॥

याच्ञाविधेः प्रथमतः परिशीलनेन
खर्वीभवन्निजवपुस्त्रपयेव नाथः ।
योऽनुग्रहात् सुरगणेषु बलिं न्यगृह्णात्[1]
तत्तादृशं स हृदि मे स्थितिमातनोतु ॥१८६॥

मान्याः क्षमाभृत इति स्मरणात् क्षमाभृ-
न्निर्मूलनं कृतमयुक्तमिदं ममेति ।
निर्वेदयोगत इव क्षितिमुज्जिहानो
योऽभ्येत्य सिन्धुमवसत् स ममास्तु भूत्यै ॥१८७॥

श्रुत्वाऽवतारमवनौ किल यस्य देवाः
स्वस्थाः स्त्रियः सुरुचयो मुनयः स्थिराशाः ।
रक्षांस्यभंसत च भूतनयापराधात्[2]
हेतोर्वधिष्यति हि नस्त्विति पातु सोऽस्मान् ॥१८८॥

चित्तं यदीयमभजत् किल कृष्णभावं
यन्नेत्रमप्युदवहत् बत कृष्णभावम् ।
यस्याधिका मधुरुचिर्मधुवैरिणोऽपि
सोऽयं मुदे भवतु मे जगदेकवीरः ॥१८९॥

यः सर्वदा मुनिजनानपि वीतरागान्
गीता[3]नुरक्तहृदयानकरोत् विचित्रम् ।
यत्पादपल्लवनिवेशितचित्तवृत्तिः
गोपीजनः प्रियरुचिं न बभार सोऽव्यात् ॥१९०॥

---

१. न्यगृह्णात् ख ग ।
२. भूतनयोपरोधात् ख ग ।
३. भूता° क ।

तुङ्गस्तुरङ्गवपुरङ्ग रथाङ्गपाणिः
भङ्गं करिष्यति कलेरविभङ्गवीर्यः[1] ।
तं गाहतां[2] मम सदाञ्जलिरङ्गनाङ्ग-
संगेषु दूरगमसंगजनान्तरङ्गम् ॥१६१॥

इति स्तुत्वा दूरतो विमानं नीत्वा सभक्त्युन्मेषम् अञ्जलिं कृत्वा—

## कावेरीवर्णनम्

फुल्लद्धल्लकतल्लजोल्ललनवत्कल्लोलनिर्लोलित-
स्वर्लोकोल्लसदब्जदृङ्मणिगणस्रग्भारविभ्राजिता ।
एषाऽखण्डकवेरजाखिलजगद्दोषापहारोद्यता
केषामर्हति न स्तुतिं क्षितितले[3]ऽशेषाभिमान्या स्वयम् ॥१६२॥

जयः[4]—

अवधार्य तत्त्वमवधानशालिनः
कमलासखाङ्घ्रिकमलानुषङ्गिणः ।
कनकाभिलाषरहितस्य तेऽधुना
कनकानुषङ्गिहृदयं बभूव ह ॥१६३॥

विजयः—अनादिपापवासनया शब्दच्छलेनापि दोषम् आरोपयसि—

प्रायश्चित्तेषु ये चैनां प्रायश्चित्तेष्वनुत्तमाम् ।
वहन्ति सदृशस्तेषां नास्ति धन्यतरो[5] भुवि ॥१६४॥

मरुद्वृधाया जलमाश्रितान्या
मरुद्वृधायासजुषस्सपापान्[6] ।

---

१. सूर्यः ख ग ।
२. गाहतात् ख ग ।
३. सुर्महिमा ख ग ।
४. 'जयः' नास्ति ख ग ।
५. धन्यतमो ख ग ।
६. पापात् ख ग ।

संस्पर्शमात्रेण पुनाति सोऽयं
ममास्तु भूत्यै भुवि निस्तुलायै ॥१६५॥

अपि च[1]—

कवेरजाया विभवः समिन्धे
कवेरजाया विभवस्य हेतुः ।
स्वस्य स्वहेतुत्वमदृष्टपूर्वं
तदेतदत्यद्भुतमङ्ग पश्य ॥१६६॥

इति स्तुत्वा सुदूरं गत्वा, अन्यतः[2] चक्षुः निक्षिप्य[3] सोल्लासम्—

भाया नदी प्रवहति प्रसभं जनाना—
मायासमध्वनि भवं स्वयमुद्धुनाना ।
कायाधवप्रभृतिचित्तवदच्छभूता
मेयानुभावमुनिसंघनिषेव्यमाणा ॥१६७॥

इत्युक्त्वा अन्यतो गत्वा[4] विलोक्य[5] सानन्दम्—

शिरोचलं पश्य सरोजबन्धुं
निरोधयन्तं स्ववरोरुशृङ्गैः ।
विन्ध्याचलत्वभ्रममावहन्तं
सन्ध्या गतिः यत्र हि खेचराणाम् ॥१६८॥

किं च—

वेतण्डेन्द्रोरुकाण्डत्रुटितविटपिसंघातखण्डप्रचण्ड-
ज्वालस्फायद्दवाग्निप्रसरणसततोद्भासिताशावकाशम् ।

---

१. किं च ख ग ।
२. अग्रतः ख ग ।
३. नीत्वा क ।
४. 'गत्वा' नास्ति ख ग ।
५. अवलोक्य ख ग ।

लीलालोलायमानद्विपरिपुपटलालोकवेलातिवेला
भिन्धद्धीतिप्रधावन्मृगकुलनिबिडं पश्य शीर्षाचलेन्द्रम् ॥१९९॥

इत्युक्त्वा दूरं गत्वा अवलोक्य सानन्दम्—

## महीशूरपुरवर्णनम्

महीशूरपुरीं पश्य महीशूरजनान् नरः[1] ।
धनदायिकरो यत्र धनदाधिकभूतिदः ॥२००॥

एषा किल विजितदोषाकरवदनभूषालसदमरयोषापरिषदविशेषाधिक-महित-वेषाञ्चित[2]मधुरभाषान्वितपटुमनीषाधिकसुगुणयोषाजनकरतलकलितवीणा-वाणीनिशमनकुतूहलसमुपगतविबुधकुलविरचितनुतिघोषमुखरिता, समीरणगरुड-डम्बरविडम्बकनिजगतिधाटीविजितसुरघोटीगतिपरिपाटीकपटुतरघोटीमणिशत-कोटीखरखुरकोटीदृढतरसंघट्टसमयसमुद्भवदमित-तर[3]धूलीधूसरितनभोमण्डलतया महीशूरपुराधिपतेः प्रतापतपनेन परा[4]जितोऽयमादित्यो मन्दीभूतो न प्रकाशत इति शङ्कामङ्कुरयन्ती, उद्यानविहरदनवद्याद्भुतविविधविद्यानिवहनिषद्यायितमहित-विद्याधरयुवतिहृद्याप्रतिमगीतिविद्यानिशमनकुतूहलविवशशुकशारिकात्रोटिपुटको-टीकुट्टनदलितदाडिमफलनिकुरुम्बितकरम्बितप्रान्तदेशतया प्रतापानुभावनत-सामन्तमौलिमणिशोणपदारविन्दस्य नरेन्द्रस्य विहारकुतुकेन निर्गतस्य चरणनलि-नयोः प्रत्यर्थिनरपतिकुलसमभ्यर्चिताः कुरुविन्दमणिगणा इति भ्रान्तिमुज्जृम्भयन्ती, अभिनवजलधरपटलरुचि[5]निचयमदहरण-[6]निपुणरुचिविलसितचिकुरभरलसदभि-नवकुसुमनिवहनिस्सरन्मधुरमधुरसपानलोललोलम्बनिकुरुम्बकलित-झङ्कार[7]व्या-जेन[8]चतुर्मुखपञ्चमुखप्रमुखनिखिलबर्हिर्मुखगण-[9]चित्तसंक्षोभधुरीणप्रसूनमयनिज-

---

१. °जनान्तराम् ख ग ।
२. °विशेषाञ्चित° ख ग ।
३. '°तर°' नास्ति ख ग ।
४. पुरा° क ।
५. °रुचिरनि° ख ग ।
६. विहरण ख ग ।
७. °मुकरव्या° ख ग ।
८. 'चतुर' इत्यधिकः ख ग ।
९. 'गण' नास्ति ख ग ।

शरप्रभावस्य मकरध्वजस्य त्रिभुवनविजययशस्समुद्घोषयद्भिरिव उदयगिरि[1]-शिखरिशिखरशेखरतरणिकिरणकरसमरनिपुणमणिगणखचिताभ्यां भूषणप्रभा-मण्डलपराजिततया सान्त्ववाचं श्रावयितुम् उपा[2]गताभ्यां सूर्याचन्द्रमोभ्यामिव ताटङ्काभ्यां विराजमानैः स्वविषयीकरणसमयदूरीकृतमुनितत्त्वालोचनाभ्याम् अभिनवनीलोत्पलदलश्रीमोचनाभ्याम् असमशरत्रैलोक्यविजयश्रीसूचनाभ्यां पर-ब्रह्मवत् श्रुत्यन्तविश्रान्ताभ्यां शङ्करवत् बहुधा कामोपजीव्याभ्यां चतुर्मुखवद्भुव-नजातायिताभ्यां दैत्यापनीतनिगमान्वेषणव्यग्रभगवद्दम्मीनाकृत्युपशोभिताभ्यां भगवच्चरणारविन्दवत् सत्तारकाभ्यां सुरपुरिवत् इन्द्रोपलालितताम्रसभाकाभ्यां नयनाभ्याम् उपशोभमानैः रतिसमयसमुद्भूतबहुतरक्षतपरिलसिततया किंशुक-सुम[3]जटिलमहीभृदुपमाम् आवहद्भ्यां निखिलनिगममकुटपरिषदधिगमसमधिगत-चिदचिदीश्वर - याथात्म्य[4]ज्वलदनलोपममुनिजनहृदयदृढिमविघटनमहाव्रतपूर्तिम् अभिलषमाणस्य अमन्ददर्पस्य कन्दर्पस्य माङ्गलिक-हेम[5]कुम्भाभ्यामिव कुचकुम्भा-भ्यां विभ्राजमानैः नन्दनवनैरिव सुरतरुचिरशोभैः स्वर्गार्थिभिरिव रम्भोरुरुचिभिः दुर्योधनचेष्टितैरिव धर्मजातविरोधिभिः साधुभिरिव परमजाराधिकरुचिभिः मेघै-रिव चपलाश्रितैः नृपैरिव विपुलाशादन्तुरैः शूरैरिव समरहितैः भ्रमरैरिव मधुपान-मत्तैः सच्चास्त्रै[6]रिव उपरत्यधिगत[7]सुखप्रीतिप्रतिपादनपरैः रुचिरतनुकाण्डविलसै-रपि अतनुकाण्डविलासैः श्रुत्यन्तरङ्गालापैरपि श्रुतिप्रतिकूलालापैः अनवरतगीता-सक्तिभिरपि दूरीकृतगीतासक्तिभिः जाराधिकरुचिभिरपि अजाराधिकरुचिभिः पीताधरैरपि बिम्बाधरैः केशवाराधिकैरपि अनभिलषितमुक्तिभिः समुज्जृम्भित-रति[8]मदैरपि[9] चुलकितरतिमदैः बहुपाणिपीडितैरपि पाणिग्रहणविधुरैः उत्तमा-लङ्कारशोभितैरपि अनन्वयशालिभिः समुल्लासितसारसगतिभिरपि अवधीरित-सारसगतिभिः विटकुलकलितसभाजनैः वेश्याजनैः समुद्भासिता, अनवरतहूयमा-

---

१. 'गिरि' नास्ति क।
२. उपग° ख ग।
३. °सुमनज° ख ग।
४. °याथार्थ्यज्व° ख ग।
५. °होम° ख ग।
६. स्वच्छास्त्रै° क।
७. उपर्यप्यभ्यधिकगत° ख ग।
८. '°रति°' नास्ति ख ग।
९. °मकुटैरपि क।

नाग्निहोत्रधूमस्तोमकरम्बितनिखिलदिङ्मण्डलैः अनुपमगुणगणमहार्णवैः अनवधिकशमदमादिसंपदलङ्कृतैः [1]अतिशयितनिजमतिमहिमलज्जितधिषणधिषणैः अधिगतसकलकलाकलापैः अखिलभूमण्डलमण्डनैः अनेकसिद्धान्तनीतिपरिश्रमविमलीकृतनिजधिषणैः अति- [2]मृदुलहृदयकमलकुहरविहरदमरवरविनुतमुखपरमपुरुषचरणनलिन[3]युगलभजनगरिमविधुतनिखिलदुरितनिचयैः अत्यादरोपचार्यमाना[4]तिथिवर्गैः अनवधिकश्रद्धाविशेषपूज्यमानपितृदेवतैः आलोच्यमानधर्मशास्त्रनिकरैः अभ्यस्यमानयोगगतिभिः अभ्यर्च्यमानभगवदेकान्तिजनैः अतिक्रूरकथककुलकलितनिगममकुटसंकटप्रशमनप्रकटपाटवैः अविच्छिन्नभगवदनुभवजनितमहानन्दकन्दलितनिजमानसैः अग्निष्टोममुखमखनिचयनिवर्तन-समय[5]समुज्जीवितनिखिलसुरगणैः व्याकरणवत् साधुपुरुषविभक्तिप्रतिपादकैः न्यायवत् भूयोदर्शनव्याप्तिवादशोभितैः तन्त्रवत् अपूर्वार्थसाधनपरैः त्रय्यन्तवदुपनिषदर्थप्रतिपादनपरैः धर्मशास्त्रवदवधीरितपरदाररुचिभिः महाभारतवत् प्रकटितधर्मजातप्रशंसैः, सत्कविफणितिवत् विपुलालङ्कारैः रामायणवत् समुद[6]ञ्चितभारतोदन्तविभवैः महागजवत् सन्ततदानशालिभिः वासरारम्भवत् परिस्फुरत्पद्मरागारुणीकृतनिशान्तैः तारागणवत् विष्णुपदसंश्रयशालिभिः मेघैरिव विद्युद्भासितैः द्वारकावासिभिरिव कृष्णराजदयोत्कर्षशोभमानैः, नन्दनवत् बहुकल्पकैः अनवरतसन्तोषितसज्जनैः सततसंरक्षितनमज्जनैः[7] [8]निर्मलतरमहिमपरमपुरुषचरितमहामृताब्धिकृतमज्जनैः विद्वज्जनैः संशोभिता[9], सुरपुरीव विपुलामरसंकुला भोगवतीव अहिनकुलाध्युषिता अलकेव धनदाधिक[10]शोभिता अयोध्येव रामाभिरामा द्वारकेव परमहित[11]गोपा-

---

१. 'अतिशयित······विमलीकृतनिजधिषणैः' इत्यन्तस्त्रुटितः ख ग।
२. °मृदुलहृदयकमलकुहर° नास्ति ख ग।
३. चरणनलिन° नास्ति क।
४. °पचीयमाना° ख ग।
५. समय° नास्ति ख ग।
६. रामसमुद° ख ग।
७. °तमज्जनैः ख ग।
८. 'निर्मल ······मज्जनैः' इत्यन्तस्त्रुटितः क।
९. उपशोभिता ख ग।
१०. धनधिक° ख ग।
११. परमहित° ख ग।

निरुद्धविभवा हस्तिनापुरीव सुयोधनागोपशोभावहा काशीव श्रीमद्वैष्णवचक्रतेजः-पलायितभीममहागृहा, लङ्केव पुण्यजनाधिष्ठिता मिथिलेव परमधार्मिकजनक-रम्बिता[1] किष्किन्धेवानवद्य[2]काननौकःशब्दव्यासक्तद्विजकुला मधुरेव परमबलोद्भा-सिता, कलशोदधिवत् लक्ष्मीप्रसूतिः, चन्द्रचूडमूर्तिरिव दुर्गोपशोभिता, विरिञ्च-मूर्तिरिव परमहंसोपशोभमाना, नारायणमूर्तिरिव रथचरणोत्कर्षशालिनी, मातङ्ग-कुलाधिष्ठितापि विशुद्धतमा अहीनभावमुपगतापि निराकृतभुजङ्गयोगा सुमनः-कुलसंकुलापि अपरागयोगा चकास्ति ।

*जयः*—

अस्यां वसन्नपि जनः परमर्द्धियुक्तो
नूनं दिगम्बरसखत्वमहो बिभर्ति ।
नष्टा पदावलिरपि स्वयमङ्गभास्व-
दष्टापदावलिरसाविह बोभवीति ॥२०१॥

*विजयः*—तिष्ठतु एषः शब्दचमत्कारमूलो दोष इति ।

यत्रोद्यानविहारकौतुकसमायातामरान्तःपुर-
व्रातस्फीतकुचोपमर्दगलिता मुक्तासरा भासुराः ।
नृणां संजनयन्ति संशयमहो संमूर्तयः कीर्तयः
श्रीमत्कृष्णमहीमहेश्वरमणेरुज्जृम्भमाणा इति ॥२०२॥

यस्यां वारविलासिनीकुचतटीपाटीरपङ्कोल्लसत्-
कस्तूरीघनवासनासु मिलिता वाता हि वातायनैः ।
निर्गत्य प्रसृता दिशासु यमिनां वैराग्यवृत्ति परां
संप्रत्यात्मवदञ्जसा गतिमतिं हा हन्त कुर्वन्त्यमी ॥२०३॥

यस्यां पण्डितमण्डलीगृहमणिस्तम्भप्रभामण्डलैः
आदित्यः परिभूयमानमहिमा धावत्यसौ सत्वरम् ।

---

१. 'जनकरञ्जिता' *ख ग* । २. 'नवरतका' *ख ग* ।

नूनं हव्यवहोऽपि हन्त कुरुते सन्तं झटित्याश्रयं
लज्जावेशवशाज्जनैः परिहरन् संदर्शनं स्वात्मनः ।।२०४।।

अन्यतो विमानं गमयित्वा विलोक्य सभक्त्युन्मेषम्—

यादवाद्रिक्षेत्रवर्णनम्

यदुक्ष्माभृदसौ भाति यदुक्ष्माभृदधिष्ठितः ।
यतिक्ष्माभृद्बहुमतो बहुक्ष्माभृदुपासितः ।।२०५।।

एष किल दोषकुलपेषणविशेषपटुभाषनततोषकरवेषनतिघोषविधिपोषरिपुशोषसुमनीषमणिभूषसदुन्मेषकरशेषशयदिव्यतनुकान्तिकरम्बिततया संश्रितजनस्वान्तदुर्दान्तध्वान्तसन्दोहमुन्मूलयन् अभ्रङ्कषशिखरगोपुरनिकरकुहरविहरदमरपुरसुदृगुपकलितगीतिनिनदनिचयनिशमनसमयजरीजृम्भत्प्रमोदभरनरीनृत्यदखिलदरीशयसरीसृपकुलफणामणिघृणिलहरीनिरीक्षणसततदूरीकृतनैशसन्तमसशङ्कातङ्कनिष्प्रत्यूह-विहार[1]माणकोकमिथुनतन्तन्यमानक्रेङ्कारवमुखरितदशदिशावकाशः कलशजलधिदुहितृकमनचरणनलिनयुगलभजनकुतुकसमुपगतपरपरिबृढपरिषदनुगतमञ्जुलगतिचटुलकुञ्जरवरपुञ्जगण्ड[2]-स्थलगलदनर्गलमदधुनीपानलोभलोललोलम्बनिकुरम्बकरम्बिततया स्वगुणातिशायिभगवदनुपमतनुरुचिवैरवरीनिरीक्षणकुतूहलात् अत्र समुपगता नीलाम्भोदगणा इति शङ्कामङ्कुरयन् निरतिशयपुण्यसञ्चयप्रक्षीणाशेषजन्मोपचितपापराशिना परमपुरुषचरणनलिनशरणवरणजनिततदाभिमुख्येन सदाचार्योपदेशोपबृंहित-शास्त्राधिगत[3]तत्त्व[4]याथात्म्यावबोधपूर्वकाहरहरुपचीयमानशमदमतपःशौचक्षमार्जवभयाभयस्थानविवेकदयाहिंसाद्यात्मगुणोपेतेन वर्णाश्रमोचितपरमपुरुषाराधनवेषनित्यनैमित्तककर्मोपसंहृतिनिषिद्धपरिहारनिष्ठेन भक्ति-काष्ठातो[5]ऽनवरतस्तुतिस्मृतिनमस्कृतियजनकीर्तनगुणश्रवणवचनध्यानार्चना[6]दिप्रीतपरमकारुणिकपुरुषोत्तमप्रसादविध्वस्ताशेषस्वान्तदान्तेन प्रगुण-

---

१. °विहर° ख ग ।
२. 'गण्ड' नास्ति ख ग ।
३. °शास्त्राधीत° ख ग ।
४. '°तत्त्व°' नास्ति क ।
५. °कारितो° क ।
६. 'अर्चन' नास्ति ख ग ।

गुणमहार्णवेन अपरोऽयं पाणिनिः, अन्योऽयं पतञ्जलिः, परोऽयं गौतमः, अपरोऽयं कणादः, अन्योऽयं जैमिनिः, अपरोऽयं बादरायणः इति शङ्क्यमानेन भगवतेव शेषभोगरुचिना विहगपरिबृढेनेव भागवतचरणा[1]रविन्दासक्तिशालिना शङ्करेणेव आर्यागमानन्दित[2]हृदयेन द्रुहिणेनेव अनवरत-सत्यासक्तेन[3] महेन्द्रेणेव वरदाननिपुणेन यक्षाध्यक्षेणेव प्रकटितसर्वज्ञभावेन कुहनामत्स्येनेव निखिलनिगमनानायासधरेण कपटकूर्मेणेव मन्दरागभृता महावराहेणेव [4]संभृतविपुलानन्दहेतुना महाहरिणेव प्रह्लादजनकदानशालिना वामनेनेव वराभिलाषिणा भार्गवेणेव विपुलाधिपापहृतिदक्षेण कपटदाशरथिनेव प्रबलभूतनयानुकम्पेन हलधरेणेव हल-पराजित[5]परमहिम्ना [6]मायागोपेनेव विहितधर्मजातादरेण कल्किनेव कलिगतिभङ्गकारिणा कविनापि विपुलामर - हितेन[7] सर्वज्ञेनापि समेक्षणेन द्विजराजेनापि भुवनजातोल्लासकारिणा लोकबन्धुनापि सदनुकूलस्वभावेन विनतानन्दनेनापि समुल्लासिताहीनकुलेन क्षमाभृतापि विपुलाशारहितेन नरसिंहेनापि परहिरण्यसंगभीरुणा अचलस्वभावेनापि सदागतिकुतुकिना बहु-शाखागम[8]शालिनापि पल्लवाश्लेषरहितेन अनलाभिख्येनापि आश्रयसंवर्धिना आर्यानुरक्तहृदयेनापि भवप्रत्यर्थिना जितेन्द्रियेणापि अनवरत- कान्ता[9]न्तरंगेण सभाजितगुरुणापि अवधीरितगुरुणा समुद्रेणापि अजलध्यात्मना सुग्रीवेणापि पुण्यजनबाधरहितेन सुमनस्वभावेनापि मधुपसंगरहितेन वरदेनापि तृणीकृतस्वर्गेण कौस्तुभेनेव भगवद्वक्षसः हिमकरेणेव वृषध्वजमकुटतटस्य कल्पभूरुहेणेव नन्दनवनस्य मुक्ताहारेणेव रमणीजनोरोजयुगलस्य दन्तेनेव महागजस्य भहातपत्रेणेव सम्राजः सारसेनेव मानसरसः धरणीमण्डलस्य अलङ्कारभूतेन तेन[10] विद्वज्जनेन परिमण्डितः वरुणालय इव सुशोभन-

---

१. भगवच्चरणा° ख ग ।
२. आर्याभत्रानन्वित° ख ग ।
३. °सत्यानुरक्तेन ख ग ।
४. 'संभृत······महाहरिणेव' इत्यन्तः त्रुटितः क ।
५. 'पराजित' नास्ति ख ग ।
६. °महामाया° ख ग ।
७. °भीतेन ख ग ।
८. °शाखाधिगम° क ।
९. °कान्तार° क ।
१०. अलङ्कारेण विद्व° ख ग ।

क्रमकरः मानस[1] इव परमहंस- कुल[2]विराजितः दाक्षायणीस्तनप्रदेश इव नील-कण्ठसंसर्गसुभगः क्षीराब्धिरिव अमृताभ्यर्थिसमुपजीव्यः कैलास इव दुर्गोपशोभमानः युद्धसन्नद्धक्षत्रियवत् बाणासनारोपितशिलीमुखः धर्मजात इव बहुलार्जुनासक्तिः लङ्कापुरवत् पलाशकुलनिबिडः उत्तमपुरुष इव साधुसहकारयुतः शबरोद्गृहीतमृगकुलवत् कुरवकाकुलः नाट्योद्युक्त इव पृथुलतालशोभितः संक्षेप[3] इव पृथुतमालसहितः उत्तमकाव्यसन्दर्भ इवातिसरलः यदुभूभृदपि कंसहितः अनवरतसूर्याकलितसंनिधानोऽपि परमहिमशाली महीधरोऽपि विबुधराजमानितः द्विजराजमौलिलालितोऽपि भवसंबन्धगन्धासहिष्णुः अनवरतमुनिजनविरचितनुतिवचनमुखरितदशदिशावकाशः चकास्ति ।

*जयः*—

या सर्वैर्विबुधैर्यथार्थवचनैः त्रय्यन्तसद्भूषणैः
मुख्योपायतयैव[4] मुक्तिसरणेरत्यादरेणेष्यते ।
एतेन क्षितिभृद्वरेण नियतं सैषा क्षमाधःकृता[5]
हन्त स्तोतुममुं कथं नु भवतो[6] जिह्वा जरीजृम्भते ॥२०६॥

*विजयः*—तिष्ठतु एतद्धि चातुर्यमिति ।

यदुगिरिरयमिन्धे यत्र नारायणोऽसौ
यतिपरिबृढमुख्यैर्योगिभिः सेव्यमानः ।
यजनविधिधुरीणैः यज्वभिः स्तूयमानो
यमनियमविशेषैः यत्नतोऽपास्तदोषैः ॥२०७॥

निजघनतटोद्देशस्फायत्तरुप्रकरोल्बण-
प्रसवपटलीनिर्यान्माध्वीभ्रमद्भ्रमराकुलः ।

---

१. मनस *ख ग* ।
२. 'कुल' नास्ति *ख ग* ।
३. संक्षोभ *ख ग* ।
४. °तयेव *ख ग* ।
५. स्तुता *क* ।
६. भवते *ख ग* ।

गुणमहार्णवेन अपरोऽयं पाणिनिः, अन्योऽयं पतञ्जलिः, परोऽयं गौतमः, अपरोऽयं कणादः, अन्योऽयं जैमिनिः, अपरोऽयं बादरायणः इति शङ्क्यमानेन भगवतेव शेषभोगरुचिना विहगपरिबृढेनैव भागवतचरणा[1]रविन्दासक्तिशालिना शङ्करेणेव आर्यागमानन्दित[2]हृदयेन द्रुहिणेनेव अनवरत-सत्यासक्तेन[3] महेन्द्रेणेव वरदाननिपुणेन यक्षाध्यक्षेणेव प्रकटितसर्वज्ञभावेन कुहनामत्स्येनेव निखिलनिगमनानायासधरेण कपटकूर्मेणेव मन्दरागभृता महावराहेणेव [4]संभृतविपुलानन्दहेतुना महाहरिणेव प्रह्लादजनकदानशालिना वामनेनेव वराभिलाषिणा भार्गवेणेव विपुलाधिपापहृतिदक्षेण कपटदाशरथिनेव प्रबलभूतनयानुकम्पेन हलधरेणेव हल-पराजित[5]परमहिम्ना [6]मायागोपेनेव विहितधर्मजातादरेण कल्किनेव कलिगतिभङ्गकारिणा कविनापि विपुलामर - हितेन[7] सर्वज्ञेनापि समेक्षणेन द्विजराजेनापि भुवनजातोल्लासकारिणा लोकबन्धुनापि सदनुकूलस्वभावेन विनतानन्दनेनापि समुल्लासिताहीनकुलेन क्षमाभृतापि विपुलाशारहितेन नरसिंहेनापि परहिरण्यसंगभीरुणा अचलस्वभावेनापि सदागतिकुतुकिना बहु-शाखागम[8]शालिनापि पल्लवाश्लेषरहितेन अनलाभिख्येनापि आश्रयसंवर्धिना आर्यानुरक्तहृदयेनापि भवप्रत्यर्थिना जितेन्द्रियेणापि अनवरत- कान्ता[9]न्तरंगेण सभाजितगुरुणापि अवधीरितगुरुणा समुद्रेणापि अजलध्यात्मना सुग्रीवेणापि पुण्यजनबाधरहितेन सुमनस्वभावेनापि मधुपसंगरहितेन वरदेनापि तृणीकृतस्वर्गेण कौस्तुभेनेव भगवद्वक्षसः हिमकरेणेव वृषध्वजमकुटतटस्य कल्पभूरुहेणेव नन्दनवनस्य मुक्ताहारेणेव रमणीजनोरोजयुगलस्य दन्तेनेव महागजस्य महातपत्रेणेव सम्राजः सारसेनेव मानसरसः धरणीमण्डलस्य अलङ्कारभूतेन तेन[10] विद्वज्जनेन परिमण्डितः वरुणालय इव सुशोभन-

---

१. भगवच्चरणा° ख ग ।
२. आर्याभत्रानन्वित° ख ग ।
३. °सत्यानुरक्तेन ख ग ।
४. 'संभृत······महाहरिणेव' इत्यन्तः त्रुटितः क ।
५. 'पराजित' नास्ति ख ग ।
६. °महामाया° ख ग ।
७. °भीतेन ख ग ।
८. °शाखाधिगम° क ।
९. °कान्तार° क ।
१०. अलङ्कारेण विद्व° ख ग ।

क्रमकरः मानस[1] इव परमहंस- कुल[2]विराजितः दाक्षायणीस्तनप्रदेश इव नील-कण्ठसंसर्गसुभगः क्षीराब्धिरिव अमृतार्थ्यर्थिसमुपजीव्यः कैलास इव दुर्गोपशोभमानः युद्धसन्नद्धक्षत्रियवत् बाणासनारोपितशिलीमुखः धर्मजात इव बहुलार्जुनासक्तिः लङ्कापुरवत् पलाशकुलनिबिडः उत्तमपुरुष इव साधुसहकारयुतः शबरोद्गृहीतमृगकुलवत् कुरवकाकुलः नाट्योद्युक्त इव पृथुलतालशोभितः संक्षेप[3] इव पृथुतमालसहितः उत्तमकाव्यसन्दर्भ इवातिसरलः यदुभूभृदपि कंसहितः अनवरतसूर्याकलितसंनिधानोऽपि परमहिमशाली महीधरोऽपि विबुधराजमानितः द्विजराजमौलिलालितोऽपि भवसंबन्धगन्धासहिष्णुः अनवरतमुनिजनविरचितनुतिवचनमुखरितदशदिशावकाशः चकास्ति ।

*जयः*—

या सर्वैर्विबुधैर्यथार्थवचनैः त्रय्यन्तसद्भूषणैः
मुख्योपायतयैव[4] मुक्तिसरणेरत्यादरेणेष्यते ।
एतेन क्षितिभृद्वरेण नियतं सैषा क्षमाधःकृता[5]
हन्त स्तोतुममुं कथं नु भवतो[6] जिह्वा जरीजृम्भते ॥२०६॥

*विजयः*—तिष्ठतु एतद्धि चातुर्यमिति ।

यदुगिरिरयमिन्धे यत्र नारायणोऽसौ
यतिपरिबृढमुख्यैर्योगिभिः सेव्यमानः ।
यजनविधिधुरीणैः यज्वभिः स्तूयमानो
यमनियमविशेषैः यत्नतोऽपास्तदोषैः ॥२०७॥

निजघनतटोद्देशस्फायत्तरुप्रकरोल्बण-
प्रसवपटलीनिर्यन्माध्वीभ्रमद्भ्रमराकुलः ।

---

१. मनस *ख ग*।
२. 'कुल' नास्ति *ख ग*।
३. संक्षोभ *ख ग*।
४. °तयेव *ख ग*।
५. स्तुता *क*।
६. भवते *ख ग*।

## सह्याद्रिवर्णनम्

सह्याचलं पश्य समस्तदेव-
देवर्षिसंघैरनिशं निषेव्यम् ।
रसालसालप्रमुखैरमोघैः
शोशुभ्यमानं तरुभिः विचित्रैः ॥२२२॥

किं च—

सह्याह्वयं सकलसिद्धगणैरुपेतं
मह्यामगेन्द्रमनघं महनीयमेतम् ।
स्तुह्यादरेण यदि वाञ्छसि चित्तशुद्धिं
जह्याभिमानिकनरस्तवमङ्ग नित्यम् ॥२२३॥

*जयः*—किम् अनभिनन्द्यचरितमप्येनम् अभिनन्दसि—

कनकानुरागभरिताशयस्सदा
कनकावरुद्धकरणोपशोभितः ।
घनकामशोभितरणीसमाश्रितो
घनकान्तिरेष कथमङ्ग नूयते ॥२२४॥

*विजयः*—तिष्ठतु शब्दचातुर्यकृतो दोषः—

सह्यम्भज सह्यन्तरसह्यं दुरितौघं
हन्तुं कृत मन्तुं भुवि जन्तुं परिपातुम् ।
स्फीतामभिजातामघजाताभिनिहन्त्रीं
सिन्धुं श्रितसिन्धुं नतबन्धुं ह्यु दपादीत् ॥२२५॥

अपि च—

चन्दनबृन्दकसुन्दरसूनसपन्ददमन्दमरन्दसुसान्द्रम् ।
सह्यमवेह्यविषह्यवनान्तं स्तुह्यभिमुह्यति मह्यधिपोऽपि ॥२२६॥

पुनस्सानन्दम्—

सह्यक्षमाभृतममुं भजते नरो यः
सह्यक्षमाभृदिति स व्यपदेशमेति ।
नैयायिकैरवधृतो नय एष सार्थः
कार्यं हि कारणगुणैः सगुणं किलेति ॥२२७॥

इति स्तुत्वा तत्र उत्तरतो दिशि सुदूरं विमानं नीत्वा अवलोक्य सरोमाञ्चम्—

## अयोध्यानगरवर्णनम्

अयोध्या तनुतामन्यैरयोध्याऽतनुतावहृत् ।
रामाधीनानुभावा सा रामाधीनामिह क्षितिम् ॥२२८॥

सरयूपवनस्फीताध्वरयूपवरोज्ज्वलाम्[1] ।
भज मानस साध्वेनां भजमानसमृद्धिदाम् ॥२२९॥

जय :—

रामाधीनानुभावत्वं पुरस्कृत्य भवानपि ।
विरक्तजनकूटस्थः किमेनामभि-नन्दति[2] ॥२३०॥

विजय :—पिष्टपेषणमेवेदमिति—

एषा विनम्रजनदोषावलीप्रशमशोषान्विता[3] बुधजनैः
शेषाधिकैरनघवेषाञ्चितैरवनि भूषायितैस्सुमहिता ।
पूषाधिकद्युतिकभूषावलीलसितयोषामणीविलसिता
शेषाभिनन्द्यगुणपोषा जगद्दुरितमोषा विभाति नगरी ॥२३१॥

---

१. °ज्ज्वला ख ग ।
२. °नन्दसि ख ग ।
३. °तोषान्विता ख ग ।

## सह्याद्रिवर्णनम्

सह्याचलं पश्य समस्तदेव-
देवर्षिसंघैरनिशं निषेव्यम् ।
रसालसालप्रमुखैरमोघैः
शोशुभ्यमानं तरुभिः विचित्रैः ॥२२२॥

किं च—

सह्याह्वयं सकलसिद्धगणैरुपेतं
मह्यामगेन्द्रमनघं महनीयमेतम् ।
स्तुह्यादरेण यदि वाञ्छसि चित्तशुद्धिं
जह्याभिमानिकनरस्तवमङ्ग नित्यम् ॥२२३॥

*जयः*—किम् अनभिनन्द्यचरितमप्येनम् अभिनन्दसि—

कनकानुरागभरिताशयस्सदा
कनकावरुद्धकरणोपशोभितः ।
घनकामशोभितरणीसमाश्रितो
घनकान्तिरेष कथमङ्ग नूयते ॥२२४॥

*विजयः*—तिष्ठतु शब्दचातुर्यकृतो दोषः—

सह्यम्भज सह्यन्तरसह्यं दुरितौघं
हन्तुं कृत मन्तुं भुवि जन्तुं परिपातुम् ।
स्फीतामभिजातामघजाताभिनिहन्त्रीं
सिन्धुं श्रितसिन्धुं नतबन्धुं ह्यु दपादीत् ॥२२५॥

अपि च—

चन्दनबृन्दकसुन्दरसूनस्पन्ददमन्दमरन्दसुसान्द्रम् ।
सह्यमवेह्यविषह्यवनान्तं स्तुह्यभिमुह्यति मह्यधिपोऽपि ॥२२६॥

पुनस्सानन्दम्—

सह्यक्षमाभृतममुं भजते नरो यः
सह्यक्षमाभृदिति स व्यपदेशमेति ।
नैयायिकैरवधृतो नय एष सार्थः
कार्यं हि कारणगुणैः सगुणं किलेति ॥२२७॥

इति स्तुत्वा तत उत्तरतो दिशि सुदूरं विमानं नीत्वा अवलोक्य सरोमाञ्चम्—

## अयोध्यानगरवर्णनम्

अयोध्या तनुतामन्यैरयोध्याऽतनुतापहृत् ।
रामाधीनानुभावा सा रामाधीनामिह क्षितिम् ॥२२८॥

सरयूपवनस्फीताध्वरयूपवरोज्ज्वलाम्[1] ।
भज मानस साध्वेनां भजमानसमृद्धिदाम् ॥२२९॥

जय :—

रामाधीनानुभावत्वं पुरस्कृत्य भवानपि ।
विरक्तजनकूटस्थः किमेनामभि-नन्दति[2] ॥२३०॥

विजय :—पिष्टपेषणमेवेदमिति—

एषा विनम्रजनदोषावलीप्रशमशोषान्विता[3] बुधजनैः
शेषाधिकैरनघवेषाञ्चितैरवनि भूषायितैस्सुमहिता ।
पूषाधिकद्युतिकभूषावलीलसितयोषामणीविलसिता
शेषाभिनन्द्यगुणपोषा जगद्दुरितमोषा विभाति नगरी ॥२३१॥

---

१. °ज्ज्वला ख ग ।
२. °नन्दसि ख ग ।
३. °तोषान्विता ख ग ।

रामाधिकप्रथितभूमा महिष्ठगुणसीमा हि कोसलपुरी
कामान्तकत्रिदिवधामाधिपप्रभृतिवैमानिकैः सुमहिता ।
भूमावनन्यजनसामान्यनित्यसुख[1]कामाञ्चिता विजयते
हेमावबद्धगृहसामान्यचारुतरधामावभासितदिशा ॥२३२॥

अपरं चास्य महिमानं शृणु—

अस्यामाविरभूत् विष्णुः साक्षाल्लक्ष्मीधरः स्वयम् ।
रामात्मना महात्माऽसौ जगद्रक्षणतत्परः ॥२३३॥

रक्षोध्यक्षोरुविक्षोभचकितहृदयैः ब्रह्मरुद्रेन्द्रमुख्यैः
देवैः देवर्षिसंघैरपि कृतविनयैरात्मसंत्राणकामैः ।
श्रद्धाशुद्धान्तरङ्गैः शमधननिवहैश्चाभिसंप्रार्थितोऽसौ
साक्षान्नारायणः श्रीपतिरखिलतनू राममूर्तिर्बभूव ॥२३४॥

स एव रघुपुङ्गवः सकललोकनाथः सकृत्-
प्रणम्रजनरक्षणप्रथितवैभवोऽस्यां पुरि ।
उवास चिरमद्भुतं न हि जगत्यमुष्याः समा
पुरी सकलपातकप्रशमनैकदीक्षाजुषः ॥२३५॥

जयः—

शिवावतारो रामोऽसावित्यश्रौषमहं पुरा ।
कथं नु भवता तत्रभवताप्यन्यथोच्यते ॥२३६॥

विजयः—सखे मैवं वादीः । चक्षुष्मत्तया हि भवितव्यम् ।

रामायणं मुनिकृतं जगति प्रसिद्ध
वेदैश्च[2] संमितमशेषबुधाभिनन्द्यम् ।

---

१. °मुख° क । २. वेदेन क ।

धर्मार्थसाधनपरैः परिपठ्यमानं
मोक्षार्थिभिश्च नितरां प्रबलं प्रमाणम् ॥२३७॥

तद्वै भवत्कथनलेशसहं यदि स्यात्
अङ्गीकरोमि सकलं भवदुक्तिवर्गम् ।
संक्षेपतो रघुपतेश्चरितं ब्रुवन्तौ
श्रीमत्पराशरशुकावपि किं सहेताम् ॥२३८॥

श्रीमद्रामायणेऽस्मिन् निरुपधिभगवद्विष्णुनारायणाद्यैः
शब्दैर्वाच्यार्थनिर्धारण[1]-परिकलनादादिमध्यान्तनिष्ठैः ।
रुद्रांशत्वाभिमानो न हि तव घटते सर्वथा रामभद्रे
शास्त्रात् तत्त्वावधारो न भवति न पुरुषोत्प्रेक्षयेति[2] ह्यगायि ॥२३९॥

विष्णोस्संप्रार्थितत्वात् दशरथसवनेऽभ्यागतैर्ब्रह्ममुख्यैः
देवैर्देवर्षिवर्यैरपि दशवदनध्वंसकामैः समस्तैः ।
अङ्गीकृत्योक्तिमेषां दशरथतनयो बोभवीमीति तेन
प्रोक्तत्वाच्चापि रामो रघुकुलतिलको विष्णुपूर्णावतारः ॥२४०॥

युद्धे[3] वेधःप्रयुक्ते गिरिदुहितृपतेः विष्णुना स्तम्भितत्वात्[4]
हुं कृत्वा देवतानां दिवि भुवि च नृणां पश्यतामप्यृषीणाम् ।
विष्णोर्वीर्याधिकत्वादपि हरधनुषो भञ्जकत्वाच्च[5] रामो
वीराणामग्रगण्यो निरवधि[6]महिमा विष्णुपूर्णावतारः ॥२४१॥

चक्रित्वश्रीपतित्वाम्बुजदलनयनत्वादिना स्वप्नदृष्टे—
रुद्देश्यत्वात् दशास्यानुजदुहितुरपि स्वच्छभावान्वितायाः ।

---

१. °निर्धारित° ख ग ।
२. प्रत्ययेति ख ग ।
३. अस्त्रे ख ग ।
४. संमितत्वात् ख ग ।
५. भञ्जनत्वाच्च क ।
६. °निरुपधि° क ।

मन्ये नारायणं तं रघुपतिमिति संवाददार्ढ्याच्च रक्षोऽ-
धीशस्य व्यक्त एष क्षितिदुहितृपतिर्विष्णुपूर्णावतारः ॥२४२॥

रक्षोऽध्यक्षं निहत्य प्रकटितयशसं मानुषं मन्यमानं
त्वात्मानं रामभद्रं प्रति समुपगतैर्ब्रह्मरुद्रेन्द्रमुख्यैः ।
साक्षान्नारायणः श्रीपतिरखिलवपुश्चक्रपाणिस्त्वमेवे-
त्यद्धा निर्धारितत्वादपि च रघुपतिर्विष्णुपूर्णावतारः ॥२४३॥

केनोपायेन विष्णोरपि खलु लघुना नामसाहस्रपाठो
मर्त्यानां बोभवीति प्रिय वद तदितिप्रब्रुवन्त्या[1]भुमायाम् ।
तत्तुल्यं रामनामग्रहणमिति हरस्योक्तिरेषा धुनीते
त्वच्छङ्काभङ्ग तस्मात् रघुपतिरनघो विष्णुपूर्णावतारः ॥२४४॥

तत्र कश्चित् इत्थम् अनुसन्धत्ते —

कौसल्यायां जनित्वा कुशिकसुतमखं कारयित्वा समग्रं
भित्वा रौद्रं धनुस्तज्जनकदुहितरं प्रेयसीं साधु लब्ध्वा ।
गत्वाऽरण्यं तु कृत्वा निशिचरनिधनं भूसुतार्थे च सेतुं
बद्ध्वा हत्वा दशास्यं स्वयमितदयितः कोसलेन्द्रोऽवतान्नः ॥२४५॥

सौन्दिप्राणापहर्ता कुशिकसुतमुदे ताटकायाः प्रहर्ता
गौतम्याश्चोपकर्ता क्षितिदुहितृमुखाम्भोरुहोल्लासकर्ता ।
कैकेयीक्रूरवार्ताचकितपितृवचोगौरवेणानुकर्ता
कान्तारस्थस्य भर्ता समुनिपरिषदां कोसलेन्द्रोऽवतान्नः ॥२४६॥

रामो रामोच्चदर्पप्रशमननिपुणः शोभनः सर्वविद्या-
रामो रामोत्तमानाममरपुरजुषां मण्डलैर्गेयनामा ।
कामोऽकामोपक्लृप्तस्तुतिघनरुचिकस्सर्वरक्षोगणानां
भीमो भीमोदकर्ता भुवि नतविततेः कोसलेन्द्रोऽवतान्नः ॥२४७॥

---

१. पृष्टव क ।

क्रीडत्कोदण्डदण्डप्रचुररवपरित्रस्तवैरिक्ष्माभृ-
द्वर्गभ्रश्य[1]त्किरीटस्फुटघटितमणीभूषितक्ष्मातलोऽसौ ।
त्राता भीतार्तिहन्तानघमुनिविततेस्संश्रिताभीष्टदाता
धाता लोकस्य जेता रणभुवि सततं कोसलेन्द्रोऽवतान्नः ॥२४८॥

मायायोगातिगूढानतिकुहरविहरन्नीचमारीचरक्षोऽ-
ध्यक्षोरुक्षोभदक्षोज्ज्वलवरशरसंवेगसंक्षोभिताब्धिः ।
श्यामो दामोदरात्मा नवजलधरवद्भासुरामोघविद्या-
रामो रामोऽभिरामोऽनघगुणनिवहैः कोसलेन्द्रोऽवतान्नः ॥२४९॥

गर्जद्दुर्जन्तुसंघाकुलचतुरुदधिक्षोभवैयात्यशाली
वाली तूलीकृताद्रिः क्षपितदशमुखाहङ्कृतिर्हेममाली ।
सुग्रीवानुग्रहार्थं युधि खलु निहतो येन बाणेन सोऽयं
श्रीमान् कामाभिरामाकृतिरमितबलः कोसलेन्द्रोऽवतान्नः ॥२५०॥

निश्शेषक्षत्रवर्गक्षपणनिपुणदृग्जामदग्न्याट्टहास-
प्रेक्षासंमूढचेतःस्वपितृमुखसमुल्लासकोद्दामवीर्यः ।
संवर्तोज्जृम्भदम्भोरुहसुहृदुपमोदारनाराचघोर-
व्यापारालोकभीतप्रणतजलनिधिः कोसलेन्द्रोऽवतान्नः ॥२५१॥

हेमक्ष्माभृत्सकाशोद्भटकटुविरटत्कुम्भकर्णोरुगात्र-
च्छेदक्षोदप्रभूतस्थिररुधिरपरीवाहसंपूरिताब्धिः ।
पङ्क्तिग्रीवोत्तमाङ्गप्रमथनसमयोद्भूतभूमिप्रकम्प-
त्रुट्यत्क्ष्माभृद्वरिष्ठप्रकरशिखरकः कोसलेन्द्रोऽवतान्नः ॥२५२॥

रामाष्टकमिदं पुण्यं महापातकनाशनम् ।
पठतां मङ्गलं नित्यं दीर्घमायुश्च[2]सिध्यति ॥२५३॥

इत्युक्त्वा जयम् आमन्त्र्य पुनः सभक्त्युन्मेषम्—

---

१. °भ्रंश्य° ख ग। २. विन्दति क।

यो रामनाम शुभदं ननु जंजपीति
मृत्युं विधूय कुशली भुवि बोभवीति।
यज्जन्मभोग उरुभक्तिधरो महेशः
मृत्युञ्जयत्वमधिगम्य चकास्ति नित्यम् ॥२५४॥

भिक्षाकोऽपि रघूद्वह त्वदभिधाजल्पाकतावैभवात्
शम्भुर्हैमधरालयोऽपि च महेशत्वं गतो भासते।
सुग्रीवस्य भवत्पदाम्बुजभरन्यासं समासेदुषः
किष्किन्धानगराधिपत्यघटने को विस्मयः सांप्रतम् ॥२५५॥

किं च—

सासचीति पदपद्ममिदं यो
मोमुदीति रघुपुङ्गव नित्यम्।
दोधवीति दुरितव्रजमारात्
नोनवीति सनकादिरिव त्वाम् ॥२५६॥

जयः—

जनकभुवमुदारामुद्वहन्नेष रामो
विदधदपि च भूयो धर्मभङ्गंनिकामम्[1]।
ननु च सकलरक्षोपक्षतिं हन्त[2] कुर्वन्
कथमिव भवताऽद्य स्तूयते सादरेण ॥२५७॥

विजयः—तिष्ठत्वेतत्—

सदा रामः श्रीमान् जयति समुदारा[3]मयहरः
मुदा रामः श्यामो निरवधिकसारामलयुगः।

---

१. निकामः ख ग। ३. सदुदारा° क।
२. किंच क।

अपारामर्यादस्थिरबलकनद्राममदभिद्-
विरामः शत्रूणां मधुरमधुधारामयवचाः ॥२५८॥

अपि च—

सीतापतिर्जयति भीतार्तिहासकलभूतानुकम्पितमनाः
धूतामयो मुनिवधूतापहृत्प्रणतवातात्मजैककुतुकः ।
ध्याताङ्घ्रिकस्समवदाताशयैः कमलजातादिभिर्मुनिगणैः
स्फीतादरो नमति शीतांशुभास्वदभिजाताननो गुणनिधिः ॥२५९॥

रामोऽवतात् दृगभिरामोऽनिशं त्रिदशरामोपगीतचरितः
दामोदराश्रितसदामोदकःकुसुम[1]दामोपशोभिततनुः ।
भूमोल्लसत्स्वगुण[2]भूमोदयो जनकभूमोहरूपलसितः
भीमो रिपोः प्रणतभीमो रणे भृशमभीमो विनम्रविततेः ॥२६०॥

रमणीयमिदं सीतारमणीयपदाम्बुजम् ।
धरणीपतिभिः सेव्यं शरणीकरवाण्यहम् ॥२६१॥

इति स्तुत्वा अन्यतो गत्वा अवलोक्य साञ्जलिबन्धम्—

गङ्गानदीवर्णनम्

विहितदुरितभङ्गा वीतरागैकसंगा
विहृतिपररथाङ्गा विष्णुपादानुषङ्गा ।
पृथुलतरतरङ्गा प्राप्तशर्वोत्तमाङ्गा
प्रवहति भुवि गङ्गा प्राणिरक्षान्तरङ्गा ॥२६२॥

इयं गङ्गा तुङ्गा मधुरसलिला माधवपद-
च्युता शीता सीताकमनकरुणावत्सुमहिता ।

---

१. सुरभि° क ।      २. °त्सयुग° ख ग ।

भुवं नीता स्फीतानुपमतपसा भूमिपतिना[1]
सदा गीता गीतावदनघगुणा भाति विबुधैः ॥२६३॥

जयः—

गङ्गा सभङ्गा जडधीष्टसंगा
कपालिनाङ्गा कलितानुषङ्गा ।
सुरापगेति प्रथिता कथं नु
तोष्टूयतेऽसौ भवता निकामम् ॥२६४॥

विजयः—गुणत्वेनावस्थितानां दोषत्वेनाभिधानं भवतो मतिमान्द्यं व्यक्तम् आपादयति—

परममधुरनीरां पापनीर्धूतिधीरां
यतहृदयविहारां याचमानात्युदाराम् ।
ननु भज सुरसिन्धुं नम्रवर्गैकबन्धुं
निरुपमगुणसिन्धुं नित्यशः प्राप्तसिन्धुम् ॥२६५॥

किं च—

मज्जत्त्रैविष्टपस्त्रीकुचतटविगलत्कुङ्कुमस्तोमरक्ता
लक्ष्मीहस्ताब्जलाक्षासुरुचिरमुरजित्पादपद्मारुणिम्नः ।
शङ्कामङ्कूरयन्ती हरिचरणधुनी कारणाधीनरूपं
कार्यं हीति प्रवादं प्रकटयतितरामत्रचैषा[2] यथार्थम् ॥२६६॥

क्रीडद्धंसावतंसोच्चलितसरसिजव्रातनिर्यत्ननिर्य-
न्माध्वीकोदारपूरद्विगुणितसलिलोत्सेकवच्छोभिकच्छाम् ।
तुङ्गत्वङ्गत्तरङ्गप्रकरकलकलारावसंनादिताशा-
माशामीशानबन्धोः कलय विदधतीं निर्मलां जह्नुकन्याम् ॥२६७॥

---

१. °पतिता ख ग । २. वैषा क ।

तिष्ठन्तु श्रुतयः परत्वविषये लक्ष्मीपतेः स्वर्धुनि-
स्पर्धादुर्धरविप्लवा ऋषिगणाः तिष्ठन्तु सर्वेऽपि च ।
देवित्वं निरुपाधिकं विजयसे मानं यतस्तत्पदो-
द्भूता त्वं किल मूर्धसु त्रिपुरभिद्वेधोमुखैरुह्यसे ॥२६८॥

गङ्गे गङ्गाधरत्वादतितरसुलभात् स्थाणुरप्येष देवि-
र्ब्रह्मेन्द्रादेर्गरीयान् भवति पशुपतिः सर्वविद्वत्समीड्यः ।
नूनं त्वत्स्पर्शमात्रात् प्रतिहतदुरितास्सागराः सागसोऽपि
प्राप्ताः स्वर्गं प्रतप्ता अपि कपिलदृशा वैभवं के विदुस्ते ॥२६९॥

गङ्गेऽनङ्गेषु तापव्यथितनिजतनुस्त्वां स्तुवन्नादरेण
त्वत्संस्पर्शेन शुद्धोदथदधशिरसा कामजिच्छम्भुरिन्धे ।
नो चेत् कान्तार्धदेहः कलुषितकरणः कामिनीभोगलोलः
कामारातिप्रसिद्धिं कथमिव स दधीतैष तावत् गिरीशः ॥२७०॥

किं च—

मदनाभियाति वरमौलिमालिके
मधुसूदनाङ्घ्रितटिनीह मानुषः ।
भवभावमम्ब परिहर्तुमादरात्
भवतीमुपेत्य भवभावमिच्छति ॥२७१॥

इति स्तुत्वा अन्यतोऽवलोक्य सानन्दम्—

## काशीनगरवर्णनम्

एषा काशी सकाशीकृतसुरनिलया सात्विकाशीस्वयोगा
चाकाशीति प्रकाशीभवदनवधिकानन्दसन्दोहभूमा ।
स्वेच्छेद्गच्छज्झषौघप्रचलितविकचाम्भोजकल्हारपाली
च्योतन्माध्वीकधारासुरभिसुरनदीनीरसंसिक्तरथ्या ॥२७२॥

जयः—

शिवक्षेत्रमियं काशी समस्तसुरसेविता ।
परमैकान्तिना हन्त भवता कथमीड्यते ॥२७३॥

विजयः—सत्यम् उक्तम्; अथापि रमारमणसान्निध्यातिशयेनैव काश्याः मुक्तिहेतुत्वलक्षणं माहात्म्यम् आमनन्ति रामतापिनीरहस्यविदः । तथा हि—

श्रीरामस्य मनुं जजाप परमं काश्यां गिरीशः स्वयं
होमार्चादिकमारचय्य बहुशो मन्वन्तराण्यादरात् ।
सुप्रीतश्च रघूद्वहः समभणत् संप्रह्वभूतं शिवं
दास्यामि त्वदभीप्सितं पशुपते कामं वृणीष्वेत्यथ ॥२७४॥

काशिक्षेत्रे मदीये खलु मृतिममिता ये नरास्ते विमुक्ताः
भूयासू रामभद्र त्वदनघकृपया ह्येष क्लृप्तो वरो मे ।
नान्योऽस्तीत्युक्तवन्तं रघुपतिरवदन्मामकं मन्त्ररत्नं
त्वत्तः श्रुत्वा विमुक्तो भवति परमहं संनिदध्यामिहेति ॥२७५॥

इत्येवमौपनिषदं सुरहस्यमर्थं
सद्भ्यः श्रुतं परमपावनमादरेण ।
शृण्वन्ति ये भुवि नरा विगताभ्यसूयाः
श्रीरामभद्रकृपया विमला भवन्ति ॥२७६॥

इत्युक्त्वा सुदूरं विमानं नीत्वा अवलोक्य सानन्दम् अञ्जलिं बद्ध्वा—

## द्वारकावर्णनम्

नरकचकितहृत्सद्वारकातर्यमेषाऽ-
नवधिकशुभसंपद्वारकामोपजीव्या ।
कलिबलकलुषा सद्वारकाश्चर्यशक्तिः
ननु जगति विभाति द्वारकाऽमेयभूमा ॥२७७॥

किं च—

सेवाहेवाकदेवाधिपतिमकुटस्फारगारुत्मतौघ-
ज्योत्स्नासन्दोहसंवर्धितशुभमुरजिद्देहभासां प्ररोहैः ।
श्यामीभूता नवाम्बोधरपटलपरिभ्रान्तिमुज्जृम्भयन्ती
वापी क्रीडापराणां ननु खलु शिखिनां भारते द्वारकैषा ॥२७८॥

पुनस्सभक्त्युन्मेषम्—

सेवाभावावनम्रत्रिपुरहरजटावाटिकोद्घूर्णमान-
स्वर्धुन्युद्दामपूरप्रचयसततसंसिक्तरथ्यान्तराला ।
ब्रह्मध्यानैकतानैः सनकमुनिमुखैरन्वहं स्तूयमाना
मानातीतानुभावा जयति भुवि पुरी द्वारका नामपुण्या ॥२७९॥

इति स्तुत्वा अन्यतोऽवलोक्य साञ्जलिबन्धम्—

कृष्णाकृतेः भगवतः चरणारविन्दं
वृष्णा शिवेन विधिनापि समर्च्यमानम् ।
तृष्णापहं जनिपथश्रमिणां नराणां
मुष्णातु मामकममुं हृदयान्धकारम् ॥२८०॥

इति स्तुत्वा जयविजयौ विमानेन साकं स्वालयं जग्मतुः ।

वात्स्यश्रीराघवार्येण लक्ष्मीनृहरितृप्तये ।
वैकुण्ठविजयाभिख्यं चम्पूरत्नं विनिर्मितम् ॥२८१॥

इति सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदमार्गप्रतिष्ठापनाचार्याद्यनेकविरुदा-
वल्यलङ्कृतस्य तन्त्रचतुष्टयपारावारपारीणस्य राघवाचार्यस्य
[ श्रीमद्वीरराघववेदान्तयतीन्द्रमहादेशिकस्य ] कतिपु
वैकुण्ठविजयचम्पूप्रबन्धः समाप्तः



श्रीः

# वैकुण्ठविजयचम्पूस्थपद्यार्धानाम् अकाराद्यनुक्रमेण सूची

# शुद्धाशुद्धसूची

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| १ | ७ | निरावाधैंश्वर्ये | निराबाधैश्वर्ये |
| २ | ५ | त्रयीचूडाक्रीडा° | त्रयोचूडा क्रीडा° |
| २ | १७ | त्र्य्यावैया° | त्रय्या वैया° |
| ३ | ७ | सुतोवा | सुतो वा |
| ३ | १४ | °द्वर्णनैकान्त° | °द्वर्णनैकान्त° |
| ७ | ५ | धनयोग° | घनयोग° |
| ७ | १७ | °काञ्ची | °काञ्ची- |
| ८ | १९ | निर्ममानां | निर्मर्माणां |
| १० | ४ | श्रत्यन्त° | श्रुत्यन्त° |
| १० | ६ | °वस्त्वव° | वस्त्ववं° |
| ११ | १५ | °शेमुषीको | °शेषशेमुषीको |
| १३ | १८ | संनिरीक्ष्यप्रय° | संनिरीक्ष्य प्रय° |
| १४ | १३ | योषा वेषा° | योषावेषा° |
| १५ | १६ | °धर्षंवीर्यः | °धर्षवीर्यः |
| १६ | ३ | °रथकस्य | °रथैकस्य |
| १८ | ७ | ह्युन्मि° | ह्.युन्मि° |
| १९ | १३ | निर्मंल° | निर्मल° |
| २१ | २ | कन्था | कन्थां |
| २१ | १० | °हेतुस्मृतः | °हेतुस्स्मृतः |

| पृष्ठम् | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| २३ | १४ | साधनास्था | सा धनास्था |
| २४ | १ | इत्युक्वा | इत्युक्त्वा |
| २४ | २१ | तेन्नाचार्यं | तेन्नाचार्य° |
| २५ | १४ | °कारिस्फुट° | °कारि स्फुट° |
| २५ | १४ | कर्मभि° | कर्मभि° |
| २८ | १९ | °वकुल° | °बकुल° |
| २९ | ५ | °संसारि° | °संचारि° |
| २९ | १७ | °काशास° | °काशा स° |
| ३० | १७ | °तटी सं° | °तटीसं° |
| ३० | २१ | सरसींस° | सरसीं स° |
| ३२ | ८ | त्रयी | त्रयी- |
| ३२ | १७ | °धराभस्व | °धराभस्स्व° |
| ३२ | १९ | महोदरा° | महोदारा° |
| ३५ | ११ | °पटल निर° | °पटलनिर° |
| ३५ | २२ | संहता | संहर्ता |
| ३८ | ३ | विधुमपि लीनोक्ति | विधुमपि क्वापि लीनोक्ति° |
| ३८ | १८ | प्रक्षिपसु° | प्रक्षिप सु° |
| ३९ | १३ | अवताराणामेव | अवतरणमेव |
| ३९ | १८ | जन्म प्रशा° | जन्मप्रशा° |
| ४० | ११ | °वपूमेशः | °वपूरमेशः |
| ४० | २० | सेव्यात् | सोऽव्यात् |
| ४० | १७ | °वरिणोऽपि | °वैरिणोऽपि |
| ६३ | ५ | कपालिनाङ्गा | कपालिनोऽङ्गे |
| ६३ | १५ | °मुरु° | °मुर° |
| ६४ | ९ | °नङ्गेपु ताप° | °नङ्गेषुताप° |

## संकेतशब्दविवरणसूची

| | |
|---|---|
| दशा० | दशावतारस्तोत्रम् |
| ब्र० श० वि० | ब्रह्मशब्दार्थविचारः |
| भग० | भगवद्ध्यानसोपानम् |
| विश्व० | विश्वगुणादर्शचम्पूः |
| वे० सं० | वेदार्थसंग्रहः |
| वै० वि० च० | वैकुण्ठविजयचम्पूः |
| श्रीगुण० | श्रीगुणरत्नकोशः |

• • •